# संस्कृताद्वितीयपाठः ।

छात्राणां गृहे विपण्यां राजद्वारे च परस्परम्
संस्कृतभाषायां संभाषणशिक्षकः ।

कुम्भघोणस्थेन
मल्लियं रामाचार्यसूनुना
पण्डित टी. आर्. कृष्णाचार्येण
विरचितः ।

THE

# Sanskrit Second Reader.

Treating the Act of mutual conversation
Regarding Practical Matters,
[*Approved by the Director of Public Instruction.*]
for the use of Secondary Schools.

BY

PANDIT. T. R. KRISHNACHARYA,
KUMBAKONAM.

SECOND EDITION COPIES 2000.

Price As. 10.] 1923. [Postage Extra.

Title page printed at the Sri Gopala Vilasa Press, Kumbakonam.

# संस्कृतद्वितीयपाठः ।

छात्राणां गृहे विपण्यां राजद्वारे च परस्परम्
संस्कृतभाषायां संभाषणशिक्षकः ।

कुम्भघोणस्थेन
मल्लियं रामाचार्यसूनुना
पण्डित टी. आर्. कृष्णाचार्येण
विरचितः ।

THE

# SANSKRIT SECOND READER

Treating the Art of mutual conversation
Regarding Practical Matters,
for the use of Secondary Schools

BY
PANDIT T. R. KRISHNACHARYA,
KUMBAKONAM.

SECOND EDITION. COPIES 2000.


*Price As. 10.]* 1923 *[Postage Extra.*

# PREFACE

## (to the Frist Edition.)

---

There are already several Sanskrit Readers intended for the use of youngsters and beginners written by eminent scholars and such readers have been prescribed as Text books. But by studying them, pupils are unable to secure any facility in mutual conversation. So, with a view to enable them to acquire an easy command over the Sanskrit Language and to converse with others, such as, Merchants, Foreigners, Public officers, etc. and in their own houses with their parents, sisters, brothers, and so on, I am now bringing out this short reader known as **"The Sanskrit Second Reader."**

I have no doubt the Schools that have hitherto patronised my Sanskrit First Reader, and enabled me to bring out as many as Twenty-four editions, each having about three-thousand or four-thousand Copies, will extend to me a like patronage in the case of my Second Reader as well.

In this Reader, there are altogether Thirty-two Chapters and Seventy one Lessons. The headings of the Chapters can be easliy seen from the table of contents.

The following are the special features of this Reader:—

1. Benedictory Verses.

2. In order to acquaint the pupil with new words familiar ones from other languages have been given as equivalents.

3. To save the reader, as well as the teacher, the trouble of constant reference, difficult words have been rendered into English.

4. Further to facilitate the understanding of the pupils, some terms have been rendered into Tamil, and Marathi also.

5. In the next Edition, Telugu, Marathi, Kanarese, Tulu, Hindi, etc., equivalents of Sanskrit words will also be given.

If Sanskrit teachers and Pandits in the several Schools will kindly suggest to me any changes or transformations, they will be gratefully considered while bringing out the next Edition.

In conclusion, I sincerely express my heartfelt thanks to Abhinava Bhatta Bhana, Pandit R. V. Krishnamacharya of the Government College, Kumbakonam, for having gone through the proofs of this Reader.

*Kumbakonam,*
*1—7—1921.*

The Author.

# CONTENTS.

Benedictory Verses.

# उपोद्घातः ।

---

लोके तावत् संस्कृतबालशिक्षापुस्तकानि महामहिमभिरनेकै- र्विद्वच्छिरोमणिभी रचितानि तत्र तत्र यद्यपि शतशो जाग्रति । सर्वाण्यपि तानि पाठशालासु पाठ्यत्वेन निक्षिप्तानि च । तथापि तत्पठनेन परस्परं संलापाभ्यासो नातितरां भवति । तस्मात् गृहे मातृपितृस्वसृभ्रात्रादिभिः, वीथ्यां वैदेशिकैः, विपण्यां वणिग्भिः, राजस्थाने व्यावहारिकैश्च सह संभाषणप्रकारशिक्षणाय केनाचिदणुना पुस्तकेन भाव्यमित्यभिप्रायेण अयं "संस्कृतद्वितीयपाठः" व्यरचि ।

अस्मिन्पुस्तके द्वात्रिंशत् वर्गाः एकसप्ततिः पाठाश्च वर्तन्ते । वर्गाणां नामानि विषयसूचनपत्रात् अवगन्तव्यानि ।

अस्मिन् पुस्तके इदानींतनं कालमनुसृत्य नूतनानां पदार्थानां व्यवहारसिद्ध्यर्थं भाषान्तरेभ्यः कानिचन पदानि अनुकरणत्वेन संगृहीतानि ।

अध्यापकानां कोशान्वेषणप्रयासपरिहाराय दुर्बोधपदानां आङ्गलभाषायामर्थः टिप्पण्यां प्रदर्शितः । तत्रापि दुर्निरूपाणां पदानां द्राविडभाषायां महाराष्ट्रभाषायां च अर्थो विशदीकृतः । तृतीय- संस्करणे हिण्डी–तैलङ्ग–तौलव–केरल–कर्नाटक–प्रभृतिषु भाषास्वपि विवरणं क्रियेत ।

तत्र तत्र पाठशालासु विद्यमाना उपाध्याया अस्मिन् पुस्तके कर्तव्यानि आवापोद्वापादीनि निवेदयेयुश्चेत्तदनुसारेण द्वितीय-संस्करणं संमुद्र्येत ।

एतत्पुस्तकं परिशोधितवद्भिः रा. रा. श्री. उभ. अभि-नवभट्टबाणविरुदाङ्कितैः **आर्. वि. कृष्णमाचार्यैः** कृतस्योप-कारस्य प्रतिकर्तुमशक्तोऽहं "भूयिष्ठां ते नम उक्तिं विधेम" इति नमोवाकं केवलं तेभ्यः करोमि ॥

कुम्भघोणे
१-७-१९२१.

**इति ग्रन्थकर्ता**

---

# PREFACE.

## to the

# Second Edition.

Several Headmasters of High schools in the Madras and Bombay Presidencies, as well as in Mysore, have prescribed my Second Reader as a Text-book, and I am glad that their patronage has necessitated the printing of the Second Edition.

It was suggested to me by some of my friends—Sanskrit Pandits—that the incorporation of passages of poetry would render the reader more useful and attractive. So I have added the 11th Canto of Raghuvamsa at the end of this book.

In addition to this, the paper used in this Edition is far superior to that used in the first edition. I have not deemed it necessary to raise the price, for my object has solely been to place into the hands of the Students a book as useful and cheap.

Kumbakonam,
1st September, 1923.

T. R. K.

# विषयसूचनपत्रम्.

प्रथमं मङ्गलाशासनम्.

# मङ्गलाशासनम् ।

---

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

आर्तत्राणव्रतिभिरमृतासारनीलाम्बुवाहै-
रम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः ।
यस्यां यस्यां दिशि विहरते देवि! दृष्टिस्त्वदीया
तस्यां तस्यामहमहमिकां तन्वते सम्पदोघाः ॥ २ ॥

कल्याणानामविकलनिधिः कापि कारुण्यसीमा
नित्यामोदा निगमवचसां मौलिमन्दारमाला ।
संपद्दिव्या मधुविजयिनः संनिधत्तां सदा मे
सैषा देवी सकलभुवनप्रार्थनाकामधेनुः ॥ ३ ॥

गण्डस्थलीगलदमन्दमदप्रवाह-
माद्यद्द्विरेफमधुरस्वरदत्तकर्णः ।
हर्षादिवालसनिमीलननेत्रयुग्मो
विघ्नच्छिदे भवतु भूतपतिर्गणेशः ॥ ४ ॥

लक्ष्मीं तनोतु नितरामितरानपेक्ष-
मङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं
विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥ ५॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात् ॥ ६ ॥

शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम् ॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥८॥

वालीयुतश्रवण'पालीयुगा ललित'चूलीविराजित्कुला
केलीगतानुगम'रालीकुला मधुर'मालीभिरादृतकथा ।
नालीकदृक्कुसुम'नालीकपाणिरिह'कालीयशासिसहजा
तालीदलाभतनु'माली सदा भवतु'काली शुभाय मम सा ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्टपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्वं मुनिभ्यः परम्
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ११ ॥

बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता ।
अजाड्यं वाक्पटुत्वं च हनुमत्स्मरणाद्भवेत् ॥ १२ ॥



श्रीगणेशाय नमः ।

# संस्कृतद्वितीयपाठः ।

## सर्वनामवर्गः ॥ १ ॥

### पाठः १

अहं गच्छामि २. आवां गच्छावः ३. वयं गच्छामः ४. त्वं गच्छसि ५. युवां गच्छथः ६. यूयं गच्छथ ७. सः गच्छति ८. तौ गच्छतः ९. ते गच्छन्ति १०. सा गच्छति ११. ते गच्छतः १२. ताः गच्छन्ति १३. तत् पतति १४. तानि नश्यन्ति १५. अयं मम पिता १६. इमे हरेः पुत्राः १७. इयं तव जाया १८. इमाः तस्य पुत्र्यः १९. इदं तस्याः गृहम् २०. इमानि पुष्पाणि २१. सर्वे जनाः २२. सर्वाः कन्याः २३. सर्वाणि वस्तूनि ॥

## पाठः २.

१. **एषः** दाशरथिः २. **एषा** सीता ३. **एतत्** जलम् ४. **एतानि** रत्नानि ५. **असौ** सूर्यः ६. **अमी** देवाः ७. **असौ** नारी ८. **अमूः** दुहितरः ९. **अदः** फलम् १०. **अमूनि** तृणानि ११. **यः** पुरुषः १२. **ये** अतिथयः १३. **या** वधूः १४. **याः** कथाः १५. **यत्** काष्ठम् १६. **यानि** वस्त्राणि १७. **को** देवः? १८. **के** नृपाः? १९. **का** तव कान्ता? २०. **काः** तस्य कुमार्यः? २१. **कानि** पद्मानि? ॥

---

## पाठः ३.

१. **त्वं कः**? २. **किं** ते नाम? ३. **अहं** गोविन्दस्य भ्राता ४. **मां** जानासि किम्? ५. **आवां** सतीर्थ्यौ खलु ६. **अस्मान्** **स** व्यस्मरत् ७. **तमहं** स्मारयामि ८. **अहं** त्वां तत्रा-पुर्यामपश्यम् ९. **तैर्यूयं** बहु उपकृताः १०. **तत्** कार्यम-स्माभिः कृतम् ११. **तुभ्यं** शतं ददामि १२. **मयि** **तेषां** विश्वासोऽस्ति १३. **एष** स्निह्यति **तस्याम्** १४. कुत **इयं** **मम** पुत्रमताडयत् १५. किं **तेनापराद्धम्**? १६. **यः** रथेन गच्छति **स** राजा १७. **यस्य** भार्या मैथिली **स** **एष** रामः १८. **मम** च्छात्रेषु **एकैकोऽपि** पटुः १९. ईश्वरः **अनेकान्**

---

5. सतीर्थ्यः=a fellow student. 18 छात्रः=a pupil.

जन्तून् सृजति २०. **अपरः कोऽपि** न तथाविधः २१. **इदं मम** माऽस्तु २२. **तत् तत्रैव** अस्तु २३. **अन्यन्मे** देहि २४. **अयमन्यः** सेवकः ॥

---

**पाठः ४.**

**ते सर्वे** राजपुरुषाः २. **कति** ब्राह्मणा वसन्ति ? ३. **तत्र कति** क्षुधाः ? ४. **कति** फलानि **तत्र** अपेक्षितानि ? ५. तत्कार्यं **वयं** कुर्मः ? ६. **अस्मान्** साधु विचिन्तय ७. **ते युष्मान्** पृच्छन्ति ८. **इयं तस्मै** रोचते ९. **कतममपराधम**-करोत्सः ? १०. ईश्वरो न **केनापि** सृष्टः ११. **तस्य** उत्पत्ति-र्नास्ति १२. **सर्वेषामपि स एव** स्रष्टा १३. आगच्छतु **भवान्** १४. कुत्र गच्छति **भवती** ? १५. **पूर्वेषां** मार्गोऽनुस-र्तव्यः १६. **स्वस्मै** यद्धितं तत्कुर्यात् १७. **कतरो** ब्राह्मण-उत्तमः ? १८. **अन्यतरस्मै** दक्षिणां देहि १९. **अनेके** राजानस्तत्रागताः २०. **त्वं मां** स्मर वा मा वा ; **अहं** तु **त्वां** न विस्मरेयम् ॥

---

**2.** कति = how many. 9. कतमः = which of many. 13. भवान् = your honour. 17 कतरः = which of two?. 18. अन्यतरः = one of two.

# विशेषणवर्गः ॥ २ ॥

पाठः ५.

दीर्घोऽयं दण्डः २. तस्य आकारो ह्रस्वः ३. अयं वृक्ष उन्नतः ४. नीरोगः पुरुषः सुकृती ५. कुशलोऽयं भिषक् ६. पुष्पाणि सुरभीणि ७. प्रांशुरयं पर्वतः ८. कम्बलोऽयं मृदुः ९. शिला कठिना १०. स्वेषु कार्येषु सर्वे जागरूकाः ११. परेषां कार्यात् प्रमत्तोऽयम् १२. अलसः पुरुषः सुखं न लभते १३. एकाकी पन्थानं न गच्छेत् १४. तीक्ष्णं वाक्यं न वद १५. बुभुक्षिताय अन्नं देयम् १६. धेनुः वत्से उत्सुका वर्तते १७. स्थावरेषु वस्तुषु वृक्षाः श्रेष्ठाः १८. जङ्गमेषु मानवाः श्रेष्ठाः १९. दक्षिणेन हस्तेन भोक्तव्यम् २०. मम वामः पादो भग्नः २१. आर्द्रं वस्त्रं आतपेन शुष्कं भवति २२. हृष्टः पुरुषो बली भवति २३. श्वेतो हयो धावति २४. रक्तां शाटीं संन्यासी वस्ते ॥

---

4. सुकृती = fortunate 10. जागरूकः = wakeful 11. प्रमत्तः = negligent 13. एकाकी = alone. 16. उत्सुकः = eager. 19. दक्षिणः = right (not left). 20. वामः = left. 21. आर्द्रम् = wet. शुष्कम् = dried. 24. शाटी = a cloth in general

## पाठः ६.

**कृपणं** नरं निन्दन्ति जनाः २. **वदान्यं** स्तुवन्ति ३. **मलिनं** पटं न वसीरन् ४. **धौतं** वस्त्रं धारयेयुः ५. **अल्पार्घं** सीसम् ६. **महार्घं** सुवर्णम् ७. कूपे **प्रभूतं** पयो वर्तते ८. तत्पात्र**मणु** ९. **महदिदं** निकेतनम् १०. **दरिद्रः** सुखं शेते ११. **आढ्यस्य** चोरेभ्यो भयं वर्तते १२. व्याघ्रो **घातुकः** प्राणी १३. **पिशुनो** दोषानेव गृह्णाति १४. पर्वताः **स्थिराः** १५. **सहिष्णुरयं** गर्दभः १६. राक्षसा **निर्घृणाः** १७. **कर्मकरो** भारमानयति १८. **कर्मकरी** जलं वहति १९. भुक्त्वा **तृप्तो**ऽहम् २०. इदं सरो जलेन **पूर्णम्** २१. स ग्रामात् **प्रोषितः** ॥

---

## पाठः ७.

१. **अनपराधी** स **वृद्धः** २. **कुत्सितं** कार्यं न कर्तव्यम् ३. **वञ्चकाः** क्षेमं न लभन्ते ४. **उपकारिणे** प्रत्युपकारः कर्तव्यः ५. दधि भक्षयित्वा **पुष्टो** बिडालः ६. चिन्तया **कृशो**ऽयं नरः ७. शकटस्य चक्रं **वर्तुलं** वर्तते ८. शाला **चतुरस्रा** वर्तते ९. **स्तोकं** वदेयम् १०. **वामनो** बाहू उत्क्षिपति

---

13. पिशुनः tale bearing. 15. सहिष्णुः=patient.

1. अनपराधी=innocent. 2. कुत्सितम्=censurable.
5. पुष्टः=nourished. 8. चतुरस्रा=quadrangular.

११. नदी **कुटिलं** गच्छति १२. रज्जुरियं **दृढा** १३. **पुरातनो**ऽयं देवालयः १४. **नवीनो**ऽयं ग्रामः १५. स **प्रत्यक्षम**चोरयत् १६. स **परोक्षे** मां निन्दति १७. न **नग्नः** स्नायात् १८. **सुन्दरो**ऽयं पुरुषः १९. स **कुरूपः** २०. द्विज इति ब्राह्मण-क्षत्रियविशां **साधारणं** नाम.

---

## अथ अव्ययवर्गः ॥ ३ ॥

पाठः ८.

पुनरागतो जामाता २. **प्रायः** स राम **एव** भवेत् ३. **प्रागेवा**हं तमवदम् ४. **एवं** कुरु ५. **तथा मा** कुरु ६. **अन्तर्मा** प्रविश ७. **बहिः** निःसर ८. **अलं** तव स्नेहेन ९. **सदा** त्वं **मृषा** भाषसे १०. **इदानीं** उत्तिष्ठ ११. **सर्वदा** पठ १२. **कदाचन** क्रीड १३. **अत्र** आगच्छ १४. **तत्र** गच्छ १५. **यदा** सुवृष्टि-र्भविष्यति **तदा** सुभिक्षं भवेत् १६. बुद्धिमन्तं **प्रति** **सकृत्** उक्त-मपि **अलम्** १७. बुद्धिहीनाय **असकृ**दुक्तमपि **वृथा** भवति १८. तं **बहुशो**ऽहं निवारितवान् १९. **तथापि** स तस्य **पृष्ठतो** धावति २०. प्रासादात् **अधः** पतितो बालः ॥

---

8. अलम्=enough.

## पाठः ९.

१. **कुत्र** तव गृहम् ? २. **यत्र** ब्राह्मणानां निवासः **तत्रैव** ३. पथि **पुरतः पृष्ठतश्च** दृष्ट्वा गच्छेत् ४. **अद्य** राम आगतः ५. **यदि** जीवति **तर्हि** भद्रं प्राप्नुयात् ६. **यदा कदा वा** एकवारमागच्छ ७. त्वं **यत्र कुत्र वा** गच्छ ८. अह**मपि** त्वामनु यास्यामि ९. गच्छ गच्छसि **चेत्** कान्त ! १०. सः हस्ते **किमपि** आनयति ११. मूर्खैः **सह न** भाषेथाः १२. **पूर्वेद्युः** मम जन्मनक्षत्रम् १३. **अङ्ग ! मिथ्या मा** वद १४. **रे !** तन्न **साम्प्रतम्** १५. **उच्चैर्मा** वद, वदसि **चेत्** अन्योऽपि श्रृणुयात् १६. **अधुना** भुङ्क्ष्व १७. **कदा** त्वं पाठशालामगच्छः ? १८. **मुहुर्मुहुः** पाठं पठ १९. पठनकाले **अन्यत्र न** पश्य २०. किं **उद्दिश्य** रोदिषि ? ॥

---

## पाठः १०.

१. गृहस्य **उपरिष्टात्** मार्जारो वर्तते २. **पुरः** प्रवहति नदी ३. क्षेत्रं **परितो** वृतिर्वर्तते ४. ग्रामं **समया** वन-

---

6. यदा कदा वा=at any time. 7. यत्र कुत्र वा=any where. 13. अङ्ग !=a vocative particle. O! 14. रे !=vocative particle expressing disrespect. 14. साम्प्रतम्=proper. 20. उद्दिश्य=demanding.

2. पुरः=in front. 3. परितः=around. 4. समया=near.

मस्ति ५. **दक्षिणेन** वृक्षवाटिकामालापः श्रूयते ६. औषधं **विना** शान्तो रोगः ७. **नाना** फलानि सन्ति ८. कुशश्च लवश्च रामस्य पुत्रौ ९. रामाय **वा** कृष्णाय **वा** एतद्देहि १०. **चिरं** चिन्तय ११. **तथा** भवतु १२. **चिराय** प्रतिबुद्धोऽहम् १३. **मुहुर्मा मा** पृच्छ १४. कर्तव्यं **झटिति** कुरु १५. **भोः!** **तूष्णीं** आस्स्व १६. **ननु** अहं ब्रवीमि १७. **श्वः प्रातः** तं द्रक्ष्यति भवान् १८. सर्वेऽपि भिक्षुका **युगपत्** आगताः १९. त्वं **पृथक्** तिष्ठ २०. **पठितुं** जानासि किम्?

---

## अथ कालवर्गः ॥ ४ ॥

### पाठः ११.

१. सुखकरोऽयं **कालः** २. **अद्य सोमवासरः** ३. **श्वः सूर्योपरागः** ४. द्वादश **मासा** एको **वत्सरः** ५. मनुष्याणां **आयुः** स्वल्पमेव ६. तदपि संपूर्णं चेत् शतं **वर्षाणि** ७. **मध्याह्ने** सूर्यं न पश्येत् ८. सः **दिवा** स्वपिति ९. **दिव-**

---

5. दक्षिणेन वृक्षवाटिकाम्=in the right side of a garden. 7. नाना=various. 14. झटिति=soon. 15. तूष्णीम्=silently. 18. युगपत्=at the time. 19. पृथक्=separately.

5. आयुः=duration of life. 8 } दिवा=by day.

सस्य षष्टिर्घटिकाः १०. सः **रात्रौ** जागर्ति ११ **पूर्वेद्युः** तस्य विवाहः संवृत्तः १२. **निशीथे** पिशाचाः सञ्चरन्ति १३. **ऋतवः** षट् १४. **वसन्ते** पुष्पाणि विकसन्ति १५. **ग्रीष्मे** आतपोऽधिकः १६. **वर्षासु** वृष्टिः पतति १७. यदा **जननं** तदा **मरणं** निश्चितम् १८. **शरदि** जलं निर्मलं भविष्यति १९. **हेमन्ते शिशिरे** च नीहारः पतति २०. **दुर्भिक्षे** क्लिश्यन्ते जनाः ॥

---

पाठः १२.

अतिमहतः **प्रत्यूषस्य ब्राह्मो मुहूर्त** इति नाम २. **अहोरात्रं** वन्ध्यं न कुर्यात् ३. **प्रातः** स्नान्ति ब्राह्मणाः ४. **परेद्यवि** यत्कर्तव्यं तदद्यैव कर्तुं यतेत ५. येन **वार्धके** सुखं वसेत्तत्कार्यं **यौवने** एव कुर्यात् ६. मम पञ्चसप्ततिर्वर्षाणि **जीवितं** इति ज्योतिर्विदोऽवदन् ७. जातस्य मम पञ्चविंशोऽयं **वत्सरः** ८. अस्याः स्त्रियाः अष्टादश **वर्षाणि** अभवन् ९. **यामस्य घटिकाः** सार्धाः सप्त १०. स्नात्वा **क्षणेन** आगच्छ ११. **प्रातः** कुक्कुटो रौति १२. **चैत्रे मासि** गृहे-

---

12. निशीथः = midnight. 20. दुर्भिक्षः = famine.

1. प्रत्यूषः = early morning. 2. अहोरात्रं = day and night. 4. परेद्यवि = tomorrow. 9. यामः = jam or $\frac{1}{8}$ part of a day.

गृहे गौर्या उत्सवः क्रियते १३. **तदा** गृहस्वामिनी सुवासिनीभ्यः **सायं** हरिद्रां कुङ्कुमं गन्धान् माल्यानि मोदकांश्च उपहरति १४. **ज्येष्ठस्य पूर्णिमायां** सभर्तृकाः स्त्रियो वटं पूजयन्ति १५. **शुक्लपक्षस्य षष्ठ्यां** तस्य गृहे विवाहोत्सवो भविष्यति १६. पञ्चदश **दिनानि** एकः **पक्षः** १७. **अद्य वृषभमासस्य** पञ्चदशो **दिवसः** १८. एकस्य **अहोरात्रस्य** चतुर्विंशतिः **घण्टाः** १९. एकस्याः **घटिकायाः** षष्टिः **पलानि** २०. **प्रतिपादि** न लिखेन्न पठेदिति प्राचीनानां संप्रदायः ॥

---

## अथ ग्रहवर्गः ॥ ५ ॥

---

### पाठः १३.

**आदित्याद्या** नव **ग्रहाः** २. तेषु **सूर्यस्य** प्रकाशोऽधिकः ३. तस्य **किरणाः** चण्डाः ४. **चन्द्रिका** शीतला ५. **मेघा** वर्षन्ति ६. **तटित्** क्षणं स्फुरति ७. पूर्वेद्युर्मण्टपस्योपरि **अशनिः** अपतत् ८. घनीभूतं जलं **करका** भवति ९. **धूमकेतुः** अशुभसूचको **ग्रहः** १०. **अग्नेः प्रभा** रात्रावधिका भवति

---

19. पलम्=$\frac{1}{60}$th part of a घटिका, விநாடி.

6. तटित्=lightning. 7. अशनिः=thunder. 8. करका=a hail. 9. धूमकेतुः=a comet.

११. **आकाशः** सर्वत्र व्याप्तः १२. **बुधः सोमस्य** पुत्रः १३. देवानां गुरुः **बृहस्पतिः** १४. दैत्यानामुपाध्यायः **शुक्रः** १५. **भौमस्य** वासरे नवीनं कार्यं नाऽऽरब्धव्यम् १६. **वृष्टेर्धाराः** पतन्ति १७. **हिमघनं** उपलवत्काठिन्यं वर्तते ; किंतु तत्सूर्यातपेन विलीयते १८. **उदकं** सर्वेषां प्राणिनां जीवातुः १९. ईश्वरः **अप** एव अग्रे ससर्ज २०. अस्मिन्वर्षे **वृष्टिः** सुसमयेऽभवत् ॥

---

## अथ मनुष्यवर्गः ॥ ६ ॥

**पाठः १४.**

**आत्मा** द्विविधः, **जीवात्मा परमात्मा** चेति २. **परमात्मन ईश्वर** इति नाम ३. **ईश्वरस्य** जननं मरणं च न स्तः ; स नित्यः ४. तस्य **देहस्यापि** नाशो नास्ति ५. तस्य **शरीरं अवयवाश्च** न सन्ति इति केषांचिन्मतम् ६. **जीवो देहात्** पृथग्वर्तते ७. स **देहे** स्थित्वा **सुखं दुःखं** च भुङ्क्ते ८. **जीवस्यापि जननमरणे** न स्तः ; किन्तु ते तद्देहस्यैव ९. देहस्य अनेके **अवयवाः** सन्ति १०. सर्वेष्वप्यवयवेषु **शिरः** प्रधानम् ११. **मुखे** द्वात्रिंशत् **दन्ता** वर्तन्ते १२. **आस्यस्य**

---

17. हिमघनम् = Ice. 18. जीवातुः = life existence.
12. आस्यम् = mouth.

अन्तः **जिह्वा** वर्तते १३. **चक्षुर्भ्यां** रूपं पश्यन्ति जनाः १४. **श्रोत्राभ्यां** शब्दं शृण्वन्ति १५. **नासिकया** गन्धं जिघ्रन्ति १६. **रसनया** रसं रसयन्ति १७. **त्वचा** स्पर्शं जानन्ति १८. **दन्तैः** खाद्यं दशन्ति १९. **दंष्ट्राभिः** तदेव पुनः चूर्णयन्ति २०. **हस्तौ अङ्गुलीनां** साहाय्येन ग्राह्यं गृह्णीतः ॥

---

### पाठः १५.

**नेत्रयोः तारके** तरले स्तः २. रुदत्या बालाया **नयनाभ्यां अश्रु** स्रवति ३. सा तं **युवानं कटाक्षेण** निरीक्षते ४. युवत्या **वेण्याः** पुष्पाणि गलन्ति ५. शिशुः **प्रसृतिमितं** क्षीरं पिबति ६. पवर्गीयान्यक्षराणि **ओष्ठाभ्यां** उच्चार्यन्ते ७. गायकस्य **स्वरः** कोकिलस्येव मधुरः ८. स्त्रियः **कट्यां** काञ्चीं **कण्ठे** निष्कं च धारयन्ति ९. **मुष्टिना** शिष्यं **शिरसि** कुट्टयति गुरुः १०. वृक्षात्पतितस्य **नुः अस्थीनि** भग्नानि ११. तस्य **त्वक्** अग्निना दग्धा १२. कृत्तायाः **कनिष्ठिकायाः** रुधिरं स्रवति १३. माता बालकाय **प्रदेशिन्या** शुकं दर्शयति १४. कण्टकेनाहं **पादमूले** विद्धः १५. मम **चरणौ** ग्रामगमनेन

---

16. रसयति=He tastes 1. तारका=the pupil of the eye. 3. कटाक्षः=a glance. 4. वेणी=a braid of hair. 5. प्रसृतिः=the palm. 9 मुष्टिः=the fist, closed hand. कुट्टयति=knocks. 13. प्रदेशिनी=a fore-finger. 14. पादमूलम्=the heel.

सरुजौ १६. राक्षसाः **मांसं** अदन्ति १७. **मूत्रं पुरीषं** च अप्सु नोत्सृजेत् १८. तस्या **नासारन्ध्रात् शिङ्घाणं** गलति १९. शिशोर्मुखात् **लाला** गलति २०. बालः **स्तनं** धयति २१. तापसो **जटां** धारयति २२. शवं श्मशानं नयन्ति बान्धवाः ॥

---

**पाठः १६.**

नार्यो **ललाटे तिलकं** धारयन्ति २. **अञ्जलिना** जलं पिबति ३. माता बालं **कपोले** चुम्बति ४. मम **दृष्टिः** सुदूरतः प्रसरति ५. हनुमतो **हनुः** वज्रप्रहारेण किञ्चिदभज्यत ६. योषायाः **केशाः** आ **गुल्फात्** लम्बन्ते ७. शुनो **रोम** मृदु ८. **शिखां** बधान ९. कृष्णस्य **ललाटे अलका** लम्बन्ते १०. रामः **काकपक्षाभ्यां** शोभते ११. **पुरुषस्य मुखे श्मश्रु** वर्तते

---

18. शिङ्घाणम्=the mucous of the nose. 19. लाला= Saliva, spittle. 21. जटा=clotted hair.

1. ललाटम्=the fore-head. 2. अञ्जलिः=the two palms of the hands joined together. 3. कपोलः= cheek. चुम्बति=kissos. 4. दृष्टिः=the sight of the eye. 5. हनुः=the chin. 6. गुल्फः=the ankle. 8. शिखा=a lock of hair. 9. अलकः=a curl. 10. काकपक्षः=the side lock of the hair of the head. 11. श्मश्रु=beard.

१२. **घर्मात्** देहे **स्वेदो** जायते १३. **कक्षेण** पुस्तकं वहति बालकः १४. भयात् **हृदयं** वेपते १५. लगुडप्रहारेण तस्य **वक्षसि** क्षतं जातम् १६. मम **उदरे** रुजा वर्तते १७. सः **जठरं** अन्नेन पूरयति १८. नारायणस्य **नाभौ** पद्ममुदभूत् १९. सा **स्कन्धेन** जलपूर्णं घटं आनयति २०. भयेन **ऊरू** कम्पेते २१. तस्या **नखाः** रक्तवर्णाः सन्ति २२. **चपेटेन** भृत्यं प्रहरति २३. स माणवकः **मणिबन्धे** घटिकायन्त्रं धारयति २४. तस्य **मस्तिष्कं** नास्ति, अत एव बुद्धिहीनः २५. यस्य **जङ्घायां** बलमस्ति स वेगेन गन्तुं शक्नोति ॥

---

# अथ संख्यावर्गः ॥ ७ ॥

## पाठः १७.

एक एव देवः सर्वेश्वरः २. **एका स्त्री** ३. **एकं** गृहम् ४. **द्वौ** पुरुषौ ५. **द्वे** स्त्रियौ ६. **द्वे** फले ७. **त्रयो**

---

12. स्वेदः=perspiration. 13. कक्षः=armpit. 22. चपेटः=the palm of the hand with the fingers extended. 23. मणिबन्धः=the wrist. घटिकायन्त्रम्=a watch. 24. मस्तिष्कम्=brain. 25. जङ्घा=calf of the leg, கண்டைக்கால்.

वृषभाः ८. **तिस्रो** धेनवः ९. **त्रीणि** सरांसि १०. **चत्वारो** वेदाः ११. **चतस्रः** अबलाः १२. ब्रह्मणः **चत्वारि** मुखानि १३. **पञ्च** गजाः १४. **पञ्च** करिण्यः १५. **पञ्च** भूतानि १६. **षट्** ऋतवः १७. **सप्त** द्वीपाः १८. **अष्टौ** दिशः १९. **नव** रत्नानि २०. **दश** रथाः २१. **एकादश** रुद्राः २२. **द्वादश** आदित्याः २३. कश्यपस्य **त्रयोदश** भार्याः २४. **चतुर्दश** विद्याः २५. **पञ्चदश** तिथयः २६. **षोडश** ऋत्विजः २७. **सप्तदश, अष्टादश, एकोनविंशतिर्वा** ब्राह्मणाः आह्वातव्याः २८. द्विगुणिता **दश विंशतिः** २९. **दशभिः** सङ्कलिताः **पञ्च पञ्चदश** ३०. **नवभिः** आहताः **षट्, चतुष्पञ्चाशत्** भवन्ति ३१. **विंशतेर्वियुता अष्टौ** द्वादश ॥

---

## पाठः १८.

एकविंशतिः २१. द्वाविंशतिः २२. त्रयोविंशतिः २३. चतुर्विंशतिः २४. षड्विंशतिः २६. अष्टाविंशतिः २८. नवविंशतिः–एकोनत्रिंशत् २९. त्रिंशत् ३०. द्वात्रिंशत् ३२. त्रयस्त्रिंशत् ३३. अष्टात्रिंशत् ३८. नवत्रिंशत्–एकोनचत्वारिंशत् ३९. चत्वारिंशत् ४० द्विचत्वारिंशत्—द्वाचत्वारिंशत् ४२. त्रिचत्वारिंशत्—त्रयश्चत्वारिंशत् ४३. अष्टाचत्वारिंशत्—अष्ट-

---

27. आह्वातव्यः=liable to be invited. 28. द्विगुणितः=multiplied by two 29 सङ्कलितः=added with. 30. आहतः=multiplied. 31. वियुतः=minus from.

चत्वारिंशत् ४८. द्विपञ्चाशत्—द्वापञ्चाशत् ५२. त्रिपञ्चाशत्—त्रयःपञ्चाशत् ५३. अष्टपञ्चाशत्—अष्टापञ्चाशत् ५८. नवपञ्चाशत्—एकोनषष्टिः ५९. द्विषष्टिः-द्वाषष्टिः ६२. त्रिषष्टिः-त्रयः षष्टिः ६३. अष्टषष्टिः—अष्टाषष्टिः ६८. द्विसप्ततिः-द्वासप्ततिः ७२. अशीतिः ८०. द्व्यशीतिः ८२. त्र्यशीतिः ८३. चतुरशीतिः ८४. षडशीतिः ८६. अष्टाशीतिः ८८. नवाशीतिः—एकोननवतिः ८९. द्विनवतिः-द्वानवतिः ९२. त्रिनवतिः-त्रयोनवतिः ९३. नवनवतिः—एकोनशतम् ९९.

---

## पाठः १९.

शतम् 100. एकाधिकशतम्—एकोत्तरशतम्—एकशतम् 101 द्विशतम् 102. त्रिशतम् 103. दशशतम्—दशाधिकशतम्—दशोत्तरशतम् 110. द्वे शते—द्विशते 200. त्रीणि शतानि-त्रिशतानि 300. सहस्रम् 1000. द्वे सहस्रे 2000. त्रीणि सहस्राणि 3000. त्रिंशदधिकशतम् 130. नवनवत्यधिकशतम्-एकोनद्विशते 199. त्र्यशीत्यधिकत्रिशतानि 383. षण्णवत्यधिकसप्तशतानि 796. सप्तत्युत्तरसहस्रम् 1070. षट्षष्ट्युत्तरषट्शताधिकषट्सहस्राणि 6666. दशसहस्राणि—अयुतम् 10,000. ten thousands.

लक्षम्—नियुतम् 100,000, a lac. प्रयुतम् 1,000,000, one million. कोटिः 10,000,000, a crore, ten millions. अर्बुदः 100,000,000, one hundred millions. महार्बुदः पद्मम्—अब्जम् 1,000,000,000, one thousand millions. खर्वः 10,000,000,000, ten thousand millions. निखर्वः 100,000,000,000, one hundred thousand millions. महापद्मम् 1,000,000,000,000, a billion. शङ्कुः—महाखर्वः 10,000,000,000,000, ten billions. शङ्खः——समुद्रः 100,000,000,000,000, a hundred billions. महाशङ्खः—अन्त्यः 1,000,000,000,000,000, a thouaand billions. हाहा—मध्यम्, 10,000,000,000,000,000, ten thousand billions. महाहाहा—परार्धम्, 100,000,000,000,000,000, one hundred thousand billions. धुनम् one million billions. महाधुनम् ten million billions. अक्षौहिणी one hundred million billions. 100,000,000,000,000, 000,000.

---

## पाठः २०.

पादोनम् $\frac{3}{4}$ अर्धम् $\frac{1}{2}$. पादः—तुरीयो भागः $\frac{1}{4}$. अष्टमोंशः $\frac{1}{8}$. कला—षोडशो भागः $\frac{1}{16}$. सपादः $1\frac{1}{4}$. सार्धः $1\frac{1}{2}$. पादोनौ द्वौ $1\frac{3}{4}$. सपादौ द्वौ $2\frac{1}{4}$. सार्धौ द्वौ $2\frac{1}{2}$. सार्धानि त्रीणि $3\frac{1}{2}$. पादो-

नानि पञ्च $4\frac{3}{4}$. अष्टमांशाधिकाः सार्धसप्त $7\frac{5}{8}$. एकादशकलासहिताः अष्टौ $8\frac{11}{16}$. कलान्यूनाः द्वादश $11\frac{15}{16}$. प्रथमः 1st. द्वितीयः 2nd. तृतीयः 3rd. चतुर्थः 4th. पञ्चमः 5th. षष्ठः 6th. सप्तमः 7th. अष्टमः 8th. नवमः 9th. दशमः 10th. एकादशः 11th. द्वादशः 12th. विंशतितमः—विंशः 20th. त्रिंशत्तमः—त्रिंशः 30th. शततमः 100th. सहस्रतमः 1000th.

---

## अथ जलवर्गः ॥ ८ ॥

### पाठः २१.

अब्धेर्जलं लवणम् २. उदधौ बृहत्यः ऊर्मयो वर्तन्ते ३. पर्वतेभ्यो नद्य उत्पद्यन्ते ४. शरदि सरित्सु पुलिनानि उद्भवन्ति ५. उडुपेन नदीं तरन्ति जनाः ६. सांयात्रिकः नावि उपविश्य द्वीपान्तरं गच्छति ७. बाष्पनौका जलवर्त्मना त्वरितं गच्छति ८. कैवर्ता जालानि जले प्रसार्य मत्स्यान् गृह्णन्ति ९. मीना जले प्लवन्ते १०. अर्णवस्य तलं निम्नं

---

4. पुलिनम्=மணல்மேடு. 5. उडुपम्=a raft, a float, தோணி. 6. सांयात्रिकः=a sea-merchant. 7. बाष्पनौका=steamer. 8. कैवर्तः=a fisherman. जालम्=a net.

वर्तते ११. गाधोऽयं **पल्वलः** १२. जलस्थो **नक्रो** बलवान् भवति १३. **तिमिः** बृहन्तो मत्स्यान् गिलति १४. तमपि **तिमिङ्गिलो** ग्रसते १५. तस्याप्यन्यो भक्षकोऽस्ति. तस्य **तिमिङ्गिलगिल** इति नाम १६. न बाहुभ्यां **नदीं** तरेत् १७. **कलुषं जलं** सस्यानां हितम् १८. **स्वच्छं पानीयं** पानाय हितम् १९. **सरसि भेका** रटन्ति २०. नीचाः **शंबूकान् कर्कटांश्च** आहारायोपयुञ्जते ॥

---

**पाठः २२**

**पुष्करिण्यां शैवालमस्ति**, तत् जलमाच्छादयति २. **तटाके इन्दीवरं** प्ररोहति ३. नद्याः **पात्रं** विशालमस्ति ४. अस्मिन्ग्रामे बहवः **कूपाः** सन्ति ५. जलानां परस्परं **सङ्घट्टनेन फेन उत्पद्यते** ६. नदीनां पारगमनाय **संक्रमा** बध्यन्ते ७. **आलवाले** सिक्तं जलं पक्षिणः पिबन्ति ८. सारसाः **बिसं** खादन्ति ९. **कच्छपोऽङ्गानि** कदाचित्संहरति १०. **परिखा** द्विपुरुषी

---

12. नक्रः=a crocodile. 17. कलुषम्=muddy. 19. भेकः=a frog. शम्बूकः=a snail. कर्कटः=a crab.

1. शैवालम्=moss. *கீரபாசி.* 2. इन्दीवरम्=a blue lotus. 3. पात्रम्=bed of a river. 5. फेनः=a foam 6. संक्रमः=a bridge 7. आलवालम्=a basin for water round the root of a tree, *பாத்தி*. 8. बिसम्=a root of lotus. 10. परिखा=a ditch, *அகழ்*.

वर्तते ११. कूपादुदकमुदञ्चयति बाला १२. शङ्खो देवस्य पूजायै उपयुज्यते १३. वाप्यां पङ्कोऽस्ति १४. कह्लारं रक्तमस्ति १५. कुमुदं सितम् १६. द्रोण्या मध्ये कूपकोऽस्ति १७. शुक्तिषु मुक्ताफलान्युद्भवन्ति १८. नद्याः तीरे अश्वत्थवृक्षोऽस्ति १९. जलेऽवतीर्णानां पादान् जलूका गृह्णाति २०. गिरेः निर्झरः पतति ॥

---

## अथ बन्धुवर्गः ॥ ९ ॥

---

पाठः २३.

के के तव बान्धवाः ? २. अभिमन्योर्मातुलः श्रीकृष्णः ३. तस्य मातामहो वसुदेवः ४. अयं मम जामातुर्भ्राता ५. सः पितृष्वसुः गृहं गच्छति ६. तस्य तिस्रो दुहितरः ७. मम भागिनेयस्य चत्वारः सूनवः ८. रामस्य पुत्र्यः तस्य स्नुषाः ९. ताः परस्परं यातरो भवन्ति १०. कन्यायाः

---

12. वापी = a big well. 14. कल्हारम् = a red water-lily. 15. कुमुदः = a white water-lily. 16. कूपकः = a mast of a vessel, பாய்மரம். 19. जलूका = a leech, அட்டை.

2. मातुलः = a mother's brother. 3. मातामहः = a mother's father. 5. पितृष्वसा = a father's sister. 6. दुहिता = a daughter. 7. भागिनेयः = a sister's son. 8. स्नुषा = a daughter-in-law 9. याता = a husband's brother's wife

शुल्कं न गृह्णीयात् ११. मम **भार्या यमलौ** प्रासूत १२. रामभद्रो मम **यवीयान् भ्राता** १३. श्रीनिवासो मम ज्येष्ठः १४. शिशुपालो युधिष्ठिरस्य **मातृष्वसेयः** १५. कौन्तेयाः श्रीकृष्णस्य **पैतृष्वस्रीयाः** १६. मम **श्वशुरस्य** श्वः षष्ट्यब्दपूर्तिः भविता १७. सीता **श्वश्रूं** वन्दते १८. तव **श्यालः** कुत्र वर्तते १९. सः चतस्रो **जाया** उदवहत् २०. ताः सर्वाः **सपत्न्यः** परस्परं **भगिन्य** इव स्नेहेन वर्तन्ते ॥

---

पाठः २४.

लक्ष्मणो जानक्या **देवरः** २. **प्रातिवेश्येन** सह स्नेह आवश्यकः ३. **विधुरोऽन्यां पत्नीं** परिणयेत् ४. **विधवा** अन्यं **पतिं** नोद्वहेत् ५. पञ्च **दंपतयो** भोजनाय आमन्त्रिताः ६. **गर्भिण्याः** स्त्रिया अष्टमोऽयं मासः ; आगामिनि मासे सा

---

11. यमलः=a pair, a twin. 14. मातृष्वसेयः=a son of mother's sister, मावशीचाल्योंक 15. पैतृष्वस्रीयः=a son of father's sister, अताचाल्योंक. 16. श्वशुरः=father-in-law. 17. श्वश्रूः=mother-in-law 18. श्यालः=a wife's brother. 19. जाया=a wife 20. सपत्नी=a woman whose husband has other wives, i. e., fellow-wife, சக்களத்தி.

1. देवरः=a husband's brother. 2. प्रातिवेश्यः=a neighbour. 3. विधुरः=a widower. 5. दंपती=husband and wife. 6. गर्भिणी=a pregnant woman.

प्रसुवीत ७. **पुंश्चलीं** निन्दन्ति जनाः ८. **पतिव्रतां** सर्वे स्तुवन्ति ९. **नर्तकी** भरतशास्त्रं सम्यक् जानाति १०. **गायको** वीणां वादयति ११. अस्या **जरठाया** अशीतिर्वर्षाणि १२. अर्जुनस्य नकुलः **सापत्नभ्राता** १३. तस्य भीमसेनः **सगर्भ्यः** १४. देवस्योत्सवे **वेश्यानां** नर्तनं भविष्यति १५. पितुः **पिता पितामहः** १६. पितुर्माता **पितामही** १७. **मातुलस्य** भार्या **मातुलानी** १८. पितुर्भ्राता **पितृव्यः** १९. पुत्रस्य पुत्रः **पौत्रः** २०. पुत्रस्य पुत्री **पौत्री** २१. दुहितुः पुत्रो **दौहित्रः** २२. दुहितुः पुत्री **दौहित्री** ॥

---

## अथ रोगादिवर्गः ॥ १० ॥

पाठः २५

**रोगः** प्राणानपहरति २. **व्याधिभिः** शरीरं कृशं जायते ३. **खर्वः** प्रांशौ वृक्षे स्थितं फलमपचेतुं न शक्नोति ४. **अन्धो** रूपं न पश्यति ५. **बधिरः** शब्दं न शृणोति

---

7. पुंश्चली=an unchaste woman. 8. पतिव्रता=a virtuous wife. 11 जरठा=an old woman. 12. सापत्नभ्राता=a step-brother. 13. सगर्भ्यः=a brother born by the same father and mother. 14 वेश्या=a harlot.

3. खर्वः=a dwarf.

६. **तुन्दिलः** त्वरितं गन्तुं न शक्नोति ७. **खञ्जो** गन्तुं न समर्थः ८. जलपानेन **हिक्का** शाम्यति ९. सः **उदरशूलेन** क्लिश्यते १०. **उन्मादः** चित्तं दूषयति ११. **विरेचनेन कोष्ठं** शुद्धं भवति १२. देहे रक्तं क्षीणं चेत **श्वयथुः** उत्पद्यते १३. **विषूची ग्रन्थिज्वरश्च** दुश्चिकित्सौ रोगौ १४. **अनामयं** ऐश्वर्यादप्यावश्यकम् १५. समर्थो **वैद्यः** रोगस्य **निदानं** ज्ञात्वा **अगदं** ददाति १६. तेन **औषधेन** रोगस्य परिहारो भवति १७. **व्याधितस्य चिकित्सा** कर्तव्या १८. **जरा** रूपं हरति १९. **पामनः** अङ्गानि **कण्डूयति** २०. **ज्वरः** अनेकविधः २१. तस्य केशेषु अकाले **पलितं** जातम् ॥

---

6. तुन्दिलः=a man having elevated naval. 7. खञ्जः=a lame. 8. हिक्का=hiccough, விக்கல். 10. उन्मादः=madness. 11. विरेचनम्=purging. कोष्ठम्=bowels. 12, श्वयथुः=swelling. 13. विषूची=cholera. ग्रन्थिज्वरः=plague. 14. अनामयम्=health. 15. निदानम्=first cause. 19. पामनः=a person suffering from herpes, சொறிபுள்ளவன்.

# अथ वाणिज्यसामान्यवर्गः ॥ ११ ॥

पाठः २६.

**वणिक् वाणिज्येन** धनमर्जयति २. शतेन रूप्यैः क्रीतानि वस्तूनि पञ्चविंशत्यधिकशतेन (१२५) विक्रीणाति ३. **पदार्थानां** आनयने पञ्च रूपिकाः **व्ययो** भवति ४. **उर्वरिताः** विंशती रूपिकाः तस्य **आयः** ५. एवं **वाणिज्ये धनसम्पादन**प्रकारः ६. केचन **कुसीदेन** धनं **आर्जयन्ति** ७. यः **ऋणं** ददाति स **उत्तमर्णः** ८. यः ऋणं गृह्णाति सः **अधमर्णः** ९. अधमर्णः स्वगृहीतस्य धनस्य, शतस्य एका रूपिकेति प्रकारेण **मासिकीं वृद्धिं** उत्तमर्णाय ददाति १०. इदानीं पञ्चविंशतिसहस्र (२५,०००) रूप्यमूल्यकाः **पदार्थाः** तस्य **व्यापारे** वर्तन्ते ११. ऋणतया तेन स्वीकृताः **पदार्थाः नाणकानि** च मिलित्वा दशसहस्राणि [१०,०००] भवन्ति १२. अस्यां **विपण्यां** अनेकविधा **आपणा** विद्यन्ते ॥

---

1. वणिक्=a merchant. वाणिज्यम्=traffic. 2. वस्तु=goods. 3. व्ययः=expense. 4. उर्वरितम्=remaining. 6. कुसीदम्=the profession of usury. 7. ऋणम्=debt. उत्तमर्णः=creditor. 8. अधमर्णः=debtor. 9. शतस्यैका रूपिकेति प्रकारेण=at one per cent. मासिकी=monthly. 10. व्यापारः=business. 11. नाणकम्=a coin. 12. विपणिः=a market. आपणः=a shop.

पाठः २७.

द्वादश **पैकाः** एका **आणका** २. षोडश **आनकाः** एका **रूपिका** ३. चतस्रः पैका एको **दुड्डुः** ४. षट् पैका एका **अर्धाणका** ५. क्वचित्पैकात्रयस्य **पैसा** इति नाम ६. **एकस्य रूप्यस्य** समानभारवती एका **तोला** ७. तोलात्रयमितं **पलम्** ८. अष्टौ पलानि एकः **शेटकः** [शेरः] ९. **पञ्च** शेरा एको **वीसः** १०. पञ्चपलमितः एकः **कुडुवः** ११. अष्टौ कुडुवा एकः **प्रस्थः** १२. प्रस्थद्वयमितः एकः **आढकः** १३. **धान्यानि**, तैलादीनि **द्रवद्रव्याणि** च, प्रस्थादिभिः मीयन्ते १४. **तिन्त्रिण्यादयो मूर्ताः** पदार्थाः **तुलया** तोल्यन्ते १५. कुडुवादीनि **मानपात्राणि** काष्ठेन लोहेन वा क्रियन्ते १६. पलं सेरः वीसः एवमादीनि **तोलनसाधनानि** लोहखण्डैः निर्मीयन्ते १७. **तुलायाः**

---

1. पैका = a pie, பை. 2. आणका-आनका-आनकः-अना = an anna, ஒரு அணா. 3. दुड्डुः = துட்டு. 5. पैसा = pice, பைசா. 6. तोला = tola, தோலா. 7. पलम् = பலம். 8. शेटकः–शेरः = seer, சேர். 9. वीसः = viss, விசை. 10. कुडुवः = Azhakku, ஆழாக்கு. 11. प्रस्थः = padi, படி. 12. आढकः = Marakkal, மரக்கால். 13. धान्यम् = a corn in general. द्रवद्रव्यम् = liquid matter. 14. मूर्तम् = solid, கெட்டியான. तुला = a scale, தராசு. 15. मानपात्राणि = measuring vessels, அளவுபாத்திரம். 16. तोलनसाधनानि = stones of weight. 17. घटा = a scale-pan, தராசுத் தட்டு.

एकस्यां **घटायां** तोलनीयं शर्करादिकम् , अपरस्यां घटायां **तोलनखण्डानि** च **श्रेष्ठी** प्रक्षिप्य तोलयति १८. यदा द्वे अपि **घटे** समे भवतः तदा तावत्परिमितः स पदार्थ इति ज्ञेयम् १९. केषुचिद्देशेषु धान्यान्यपि **तोल्यन्ते** २०. **राजसेवाम्** अपेक्ष्यापि **वाणिज्यम्** उत्तममिति केषांचिन्मतम् ॥

---

## अथ धान्यादिवर्गः ॥ १२ ॥

---

पाठः २८.

अस्यां विपण्यां के के पदार्थाः लभ्यन्ते ? **व्रीहिः** २. **तण्डुलः** ३. **मुद्गः** ४. **माषः** ५. **चणकः** ६. **कुलित्थः** ७. **बर्बरः** ८. **धान्याकम्** ९. **तिन्त्रिणी** १०. **मरिचम्** ११. **दीर्घमरीचिका** १२. **जीरकम्** १३. **सिद्धार्थः** १४. **सर्षपः** १५.

---

श्रेष्ठी = a merchant. 20. राजसेवा = Royal service.

1. paddy, நெல். 2. rice, அரிசி. 3. green gram, பயறு. 4. black gram, உளுந்து. 5. Bengal gram, பச்சைக்கடலை. 6. horse gram, கொள்ளு. 7. beans மொச்சை. 8. coriander, கொத்தமல்லி. 9. tamarind, புளி. 10. pepper, மிளகு. 11. chilly, மிளகாய். 12. cumin seed, சீரகம். 13. white mustard, வெள்ளைக் கடுகு. 14. mustard. 15. sesamum, எள்ளு.

तिलः १६. अजमोदा १७. हरिद्रा १८. आर्द्रकम् १९. नागरम् २०. हिंगु २१. लवणम् २२. गुडम् २३. सितशर्करा २४. खण्डविकारः २५. तैलम् २६. घृतम् २७. दलम्–दाली २८. कर्पूरः २९. घनसारः ३०. एला ३१. लवङ्गम् ३२. जातीफलम् ३३. पृथुकः ३४. यावनालः ३५. प्रियङ्गुः ३६. गोधूमः एवमाद्याः पदार्था अत्र विपण्यां विक्रीयन्ते ॥

---

## अथ वस्त्रवर्गः ॥ १३ ॥

---

### पाठः २९.

इदं कौशेयं सपादद्विशेरतुलितम् २. शेरस्य मूल्यं अष्टादश रूपिकाः ३. अये तुन्नवाय! अस्याः कुमार्याः अर्धोरुकाय

---

16. Ajwan, ஓமம். 17. turmeric, மஞ்சள். 18. ginger, இஞ்சி. 19. dry ginger. 20. asafœtida 21. Salt. 22. jaggery, வெல்லம். 23. white sugar. 24. sugar candy. 25. oil. 26. ghee. 27. dholl. பருப்பு. 28. camphor, சூடம். 29. பச்சைக்கற்பூரம். 30. cardamom, ஏலக்காய். 31. clove, கிராம்பு. 32. nut-meg. 33. அவல், पोहे. 34. maize, சோளம். 35. millet, தினை. 36. wheat.

1. कौशेयम्=silk cloth. 3. तुन्नवायः=a tailor. अर्धोरुकम्=a sort of petty coat, பாவாடை, परकर.

कियद्वस्त्रखण्डमपेक्षितं भवेत्? ४. अस्याः वयः कियत्? ५. अस्या अष्टौ वर्षाणि जातानि ६. तथा चेत् अष्टावेव हस्ता अपेक्ष्यन्ते ७. पुरुषस्य **अन्तरीयाय** दशहस्तानि, **उत्तरीयाय** षड्हस्तानि इत्येवं प्रायो **वस्त्राणि** भवेयुः ८. युवतिभिः **कञ्चुको** ध्रियते ९. हस्तत्रयायामः तद्द्विगुणदैर्घ्यश्च **नीशारः** स्यात् १०. **तन्तुवायः** कार्पाससूत्रैः पटान् **वयति** ११ **कम्बलः ऊर्णाभिः** ऊयते १२. मृगरोमनिर्मितानां मृदूनामेव वस्त्राणां **राङ्कवम्** इति नाम १३. गाढेन वस्त्रेण **तिरस्कारिणी** तन्यते १४. इदानीं वस्त्राणि **वातुं यन्त्राणि** उत्पन्नानि १५. क्षालनाय नीतानि वस्त्राणि **रजकेन** आनीतानि किम्? १६. भिक्षुकाः **कन्थां** वसते १७. राजसेवकाः **उष्णीषं** शिरसि धारयन्ति १८. **क्षौमं वस्त्रं** सदा शुद्धम् ॥



---

7. अन्तरीयम्=lower garment. उत्तरीयम्=upper garment. वस्त्रम्=cloth. 8. कञ्चुकः=a jacket, bodice; சட்டை, ரவிக்கை. 9. हस्तत्रयायामः=three cubits broad. नीशारः=warm cloth, துப்பட்டி, पासोडी. 10. तन्तुवायः=a weaver. वयति=weaves. 11. कम्बलः=a blanket. ऊर्णा=woollen thread. 12. राङ्कवम्=woollen cloth. 13. तिरस्करिणी=a curtain. 14. वातुम्=to weave. यन्त्रम्=a machine. 15. रजकः=a washer-man. 16. कन्था=a rag, கந்தை. 17. उष्णीषम्=a hat, cap, a turban. 18. क्षौमं वस्त्रम्= linen cloth, காம்படி.

नाश्चतस्रो रूपिकाः नव पैकाश्च १४. एतदेव **पासञ्जरशकट-श्रेण्याः** सपादं रूपिकात्रयम् १५. एतत् **तृतीयकक्ष्यायाः** ; प्रथम-द्वितीयकक्ष्ययोस्त्वधिकम् १६. तव **यात्रासामग्री** अमिता वर्तते ; तस्याः पृथग्वेतनं देयं भवेत् १७. वेतनं कियद्देयम् ? तां **धटे** निक्षिप; तोलयित्वा कथयामि १८. तस्या भारोऽशीतिः सेरा वर्तन्ते ; **पान्थेन** पञ्चदश सेरा विना वेतनं नेतुं शक्यम् १९. अधिकानां पञ्च-षष्टिसेराणां सप्तरूपिकाः पृथक् देयाः २०. मध्ये रामनाथपुराख्ये **अवरोहणस्थाने** अवतीर्य **ग्राम्यशकट**मारुह्य दर्भशयनं गच्छ ॥

---

## पाठः ५१.

सर्वं **समीचीनं** जातम् ; मन्निकटे पञ्चैव खलु रूपिकाः उर्व-रिताः २. ताभिः कथं **यात्रां** करवाणि ? ३. अतो मह्यं पञ्चा-शतं रूपिकाः प्रेषयितुं बेङ्गळूरस्थाय मम भ्रात्रे पत्रं लिखामि ४. भोः कण्ठीरवाचार्य ! कुतस्त्वं पत्रं लिखसि ? ५. पत्रं दृष्ट्वा द्रव्यं **मणिआर्डर्द्वारा** प्रेषितं चेत् पञ्चमे दिने त्वं तत् प्राप्नुयाः ६. तथा मा कुरु ; **विद्युद्वार्तां** प्रेषय ७. बेङ्गळूरात् **विद्युद्वार्तयैव** मणिआर्डरपि प्रेषितं चेत् अद्य सायमेव तव द्रव्यमागच्छेत् ८. **कुम्भघोणे पाट्टाचार्यवीथ्याम्** आगतात् कण्ठीरवाचार्यात्, बेङ्गळूरे

---

15. तृतीयकक्ष्या=third class. 16. यात्रासामग्री=luggage.
18. पान्थः=a passenger. 20. ग्राम्यशकटः=country cart.
2. यात्रा=pilgrimage. 6. विद्युद्वार्ता=telegraph.

बेलीवीथ्यां गरुडाचार्याय ; मह्यं पञ्चाशतं रूपिकाः **विद्युन्मणि-आर्डरद्वारा** प्रेषय, इति लेख्यम् ९. तस्य कियान् व्ययो भवेत् ? १०. एतानि चतुर्दश पदानि भवन्ति ; तेषां चतुर्दश आणकाः ११. तत्कथम् ? १२. **तारावार्तायाः** एकं पदमारभ्य द्वादश-पदपर्यन्तं द्वादश आणका वेतनम् १३. तदुपरितनानां पदानां एकैकस्य एकैका अणा १४. "भवतु तथैव करोमि" इति उक्त्वा विद्युद्वार्तां प्रातः अष्टमघण्टावादनसमये कण्ठीरवाचार्यः **प्रैषयत्** १५. मध्याह्ने द्वितीयघण्टावादनसमये आगच्छन्तं **तारावार्तावहं** दृष्ट्वा कण्ठीरवाचार्योऽपृच्छत् १६. **विद्युद्वार्तावह !** मह्यं **विद्युन्मणिआर्डर्** वर्तते किम् ? १७. कियतीभिः रूपिकाभिस्तव **मणिआर्डर्** आगन्तव्यम् ? १८. पञ्चाशता रूपिकाभिः १९. साक्षिणम् आह्वय ! तस्यापि **हस्तलेखं** गृहीत्वा रूप्याणि तव ददामि २०. अहो ! आश्चर्यमेतत् ! नाद्यापि षष्ठी घण्टा अतिक्रान्ता, इयत्या त्वरया द्रव्यं मद्धस्तगतं अभूत् ॥

---

## अथ विद्यावर्गः ॥ २२ ॥

---

### पाठः ५२.

अकारादिक्षकारान्तानि **अक्षराणि** ; तान्येव एकपञ्चाशत् **वर्णाः** २. स्वहृद्गतस्य परबोधनाय पदानि **वाक्यानि** च उच्चार्यन्ते

---

15. तारावार्तावहः=telegraph-peon. 19. हस्तलेखः=signature.

३. दूरस्थबोधनाय **अक्षरैः** पत्रे **लेख्यं** लिख्यते ४. पठ एतत् **लेख्यम्** ५. उच्चारय एतं **शब्दम्** ६. पाठ्यम् उच्चैः **वाचय** ७. अतित्वरया पठितं चेत् अन्यस्तन्न बुद्ध्येत ८. मूढ! मोच्चैः पुनर्वद; तच्छ्रुत्वा अन्यस्त्वां परिहसिष्यति ९ एतत्पुस्तकं **लिख** १०. तवाक्षराणि चारूणि न सन्ति ११. अयं किं मकारः, उत पकारः इति **संदिग्धं** वर्तते १२. **मषी** घनाऽस्ति; **मषिकरण्डं** जलेन पूरय १३. इदानीं **मषिः** नितरां लघुर्जाता; तस्मात् **क्रियन्ते पत्राणि** १४. छुरिकया **लेखनीं संस्कुरु** १५. हिंदी, माहाराष्ट्री, गौर्जरी, तैलङ्गी, कार्नाटकी, द्राविडी, कैरली, यावनी, आङ्गली, तौलवी' गैर्वाणी इत्यादयोऽनेका भाषा वर्तन्ते १६. सर्वासामपि प्रातिस्विकी **लिपिः** वर्तते १७. **गैर्वाणी** लिपिः **देवनागरी** १८. इतराभ्योऽप्यतिशयेन **सुवाचा** १९. **रेखा विधातुं परिवर्तनदण्डम्** आनय २०. तव लेखने **अक्षरस्खालित्यं** बहु वर्तते २१. संस्कृतभाषा **दुर्बोधेति** केचन मन्यन्ते; उद्यमिनां सर्वं सुलभमेव २२. कुतस्त्वं स्वभाषां संत्यज्य **आङ्गलभाषया** वदसि?

---

3. लेख्यम्=writing. 4. लेख्यम्=letter. वाचय= read. 12. मषीकरण्डम्=ink-stand. 13. पत्रम्=paper. 14. लेखनी=pen. संस्कुरु=mend. 16. लिपिः=character. 18. सुवाचा=easily readable. 19. रेखा=line, परिवर्तन-दण्डः=ruler, ஞுல்கழி. 20. अक्षरस्खालित्यम्=spelling mistake. 21. दुर्बोधः=difficult, सुलभम्=easy.

## पाठः ५३.

**आसन्दे** उपविश्य **लेखनफलके** पत्राणि निक्षिप्य **लिपिकरो** लिखति २. अस्मिन्ग्रामे महती **पाठशाला** वर्तते ३. तस्यां शिरोमणिपरीक्षार्थं अशीतिः **छात्राः** पठन्ति ४. **तर्के व्याकरणे मीमांसायां द्वैताद्वैतविशिष्टाद्वैतवेदान्तेषु** च परीक्षार्थं छात्राः पठन्ति ५. अतीतमासे शिरोमणिपरीक्षा प्राचलत् ६. अशीत्यां **विद्यार्थिषु** पञ्चपञ्चाशदेव विद्यार्थिनः परीक्षायै **समुद्धृताः** ७. तेषु च षट्त्रिंशदेव **उत्तीर्णाः** ; शिष्टा **भग्नाः** ८. अस्यां पाठशालायां प्रतिपत् अष्टमी त्रयोदशी चतुर्दशी पूर्णिमावास्ये च **अनध्ययन दिनानि** ९. **शीसवर्तिकया** लिखितानि अक्षराणि शीघ्रमेव लुप्यन्ते १०. मष्या लिखितान्यक्षराणि सुरक्षितानि चेत् चिराय स्थिराणि स्युः ११. आङ्गलभाषायां लिखितं लेखं संस्कृतभाषायां **परिवर्तयितुं** जानासि किम्? १२. उपयुक्ताः **श्लोकाः वाक्यानि** च कण्ठस्थानि कर्तव्यानि १३. प्राप्ता विद्या असकृत् **आवृत्त्या-**

---

1. आसन्दः=**a chair.** लेखनफलकम्=a desk, மேசை मेज. लिपिकरः=a clerk, குமஸ்தா, कारकून. 3. छात्रः= candidate. 4. तर्कः=logic. व्याकरणम्=grammar, मीमांसा=mimamsa 6. समुद्धृतः=selected. 7. उत्तीर्णः= passed. भग्नः=failed. 8. अनध्ययनदिनम्=a day on which it is improper to study. 9. शीसवर्तिका=a pencil. 11. परिवर्तनम्=translation. 12. श्लोकः=a verse. 13. आवृत्तिः=repeating.

स्थिरा भवति १४. अस्मिन्पुस्तके रम्याः **कथाः** सन्ति १५. सर्वविधेषु धनेषु **विद्याधनम्** उत्तमम् १६. तन्न दस्युभिरपह्रियते; कुपितेन राज्ञापि अपहर्तुं न शक्यते १७. विद्या विनयं ददाति; विनयेन योग्यतां याति; योग्यतया धनमाप्नोति; धनेन धर्मं, ततः सुखं च विन्दते १८. स्वदेशे पूज्यते राजा; स्वगृहे पूज्यते धनी; **विद्वांसः** स्वग्रामे, स्वदेशे, परदेशे च पूज्यन्ते १९. तस्मात्सर्वप्रयत्नेन विद्याऽध्येतव्या २०. सा च बाल्ये **अभ्यस्ता** सुदृढा भवति ॥

---

## अथ हितोपदेशः ॥ २३ ॥

---

### पाठः ५४.

१. लोकमनुसृत्य वर्तस्व २. महतामुपदेशोऽनुसर्तव्यः ३. सर्वान् प्राणिन आत्मानमिव मन्यस्व ४. **अनवद्यान्येव** कर्माणि त्वया सेवितव्यानि ५. सत्यं वद; धर्मं चर ६. ऋषीणां यानि सुचरितानि तानि त्वयोपास्यानि ७. **मातृदेवो** भव; **पितृदेवो** भव; **आचार्यदेवो** भव; **अतिथिदेवो** भव ८. यदि ते कार्येषु **विचिकित्सा** स्यात्तर्हि यथा **संमर्शिनो** वर्तेरन् तथा वर्तेथाः

---

20. अभ्यासः = Exercise, பயிற்சி.

4. अनवद्यम् = good. 6. सुचरितम् = good conduct.
7. मातृदेवः = one who thinks his mother as God.
8. विचिकित्सा = doubt. संमर्शिन् = one judging by reason

९. महत्सु विद्यमानान्गुणानेव स्वीकुरु १०. सर्वभूतानां **अद्वेष्टा** भव ; **मैत्रो** भव ; **करुणो** भव ; **शुचिः** भवेः ११. ईश्वरस्य दासोऽहमिति मन्यस्व १२. त्यागी भव; संविभज्य भुङ्क्ष्व १३. अहरहः **वेदविहितानि** कार्याणि कुरु १४. **पित्रोः** हितं कुरु; **इन्द्रियनिग्रहं** कुरु १५. भगवान्सर्वेषां सुहृदिति विद्धि १६. परेषामपराधान् **तितिक्षस्व** १७. राज्ञि ईश्वरभावनां कुरु १८. ईश्वरेण यावद्दत्तं तावतैव संतुष्टो भव १९. क्षेमं प्राप्तुं यतस्व ; तथापि फलदाता ईश्वर एवेति चिन्तय २०. **सर्वप्रकारेण** ईश्वरं शरणं व्रज ॥

---

पाठः ५५.

ईश्वरस्य **स्वरूपं** वेदेन जानीयात् २. **मन्वादिषु** स्मृतिषूक्ताः ये **वर्णाश्रमधर्मा**स्ते त्वयाऽनुष्ठेयाः ३. ईश्वरस्य ध्यानार्थं **प्रतिमा** ऋषिभिः अभिहिताः ४. विष्णुर्गरुडारूढो वर्तते; शङ्खचक्रादीनि आयुधानि धारयति ; भक्तान् रक्षति ; इति ध्यानं कुरु ५. शिवः वृषभारूढोऽस्ति ; त्रिशूलं धरति ; भक्तेभ्यः सर्वैश्वर्यं

---

10. अद्वेष्टा=not inimical. मैत्रः=friendly. करुणः=pitiful. शुचिः=clean. 14. त्यागी=a donor. वेदविहितम्=declared in the Vedas. 14. पितरौ=parents.

इन्द्रियनिग्रहः=restraining the organs of sense. 16. तितिक्षस्व=endure. 20. सर्वप्रकारेण=by all means.

1. स्वरूपम्=natural state 2. वर्णाश्रमधर्माः=the duties of *Varnas* and *Asramas*. 3. प्रतिमा=an image.

ददाति; इति ध्यानं कुरु ६. धर्मिष्ठाः कदाऽपि न नश्यन्ति: पापिष्ठाः कदाऽपि न क्षेमं लभन्ते इति **प्रतीहि** ७. **अक्षैर्मा** स दीव्यः ८. **धर्मान्न प्रमदितव्यम्** ९. **कुशलान्न** प्रमदितव्यम् १०. **भूत्याः** न प्रमदितव्यम् ११. **देवपितृकार्याभ्यां** न प्रमदितव्यम् १२. **वेदप्रतिषिद्धानि** कर्माणि न सेवितव्यानि १३. न सुरां पिबेत्; न **परदारान्** गच्छेत् १४. **बुद्धिभ्रंशकरं** आहारं मा भक्षय १५. "अहं धनी, विद्वान्, सुरूपः" इति गर्विष्ठो मा भूः १६. परस्त्रियं **मृत्युं** विद्धि १७. अतिलोभं, अतिव्ययं च मा कुरु १८. परेषामैश्वर्यं दृष्ट्वा मा असूयेथाः १९. किंतु परेषां विद्यां दृष्ट्वा असूयां कुरु; तां प्राप्तुं यत्नं च कुरु २०. सर्वथा आत्मानं गोपायेत् ॥

---

# अथ राज्यसामान्यवर्गः ॥ २४ ॥

---

### पाठः ५६.

**महाराज्ञी विक्टोरिया** पूर्वमस्माकं **चक्रवर्तिनी** आसीत् २. इदानीं **तस्याः** पौत्रः **पञ्चमो जार्जः** अस्माकं **चक्रवर्ती** अस्ति

---

6. प्रतीहि=trust. 7. अक्षः=a die. 8. धर्मः=virtue, duty. न प्रमदितव्यम् = should not be careless 9. कुशलम् =skill. 10. भूतिः=prosperity. 11. देवकार्यम् = worship of Gods. पितृकार्यम्=obsequial rites, ceremony of parents. 12. वेदप्रतिषिद्धम्=prohibited in Vedas. 13. परदाराः=another's wife; this word is always plural and masculine gender. 14. बुद्धिभ्रंशकम्=causing loss of understanding. 16. मृत्युः=death.

राज्यसामान्यम्=general administration.

1. चक्रवर्तिनी=Empress.

३. **सः लन्दननगरे महिष्या मेरीदेव्या,** ज्येष्ठपुत्रेण **युवराजेन यड्वर्डेन,** अन्यैः पुत्रैः बन्धुभिश्च सह सुखमास्ते ४. वयं तस्य शासने **अकुतोभया** वर्तामहे ५. तत्रैका **प्रधानसभा** वर्तते ६. तस्यां सभायां अनेके **मन्त्रिणः कार्यदर्शिनश्च** नियुक्ता वर्तन्ते ७. **महाराजः** तैः सह संमन्त्र्य **यावत्सु सूर्यः कदापि नास्तमेति** तावतो **देशान् शास्ति** ८. **सः** अनेकसहस्रयोजनदूरे विद्यमानोऽपि बुद्धिसामर्थ्येन **भरतखण्डस्थं** सर्वमपि वृत्तान्तं स्वगृहे चलितमिव **करतलामलकवत्** सुस्पष्टं जानाति ९. **तेन स्वप्रतिनिधित्वेन** अधिकारितो-**महामाण्डलिकः** भरतखण्डे पूर्वं पाण्डवानां राजधानीभूते **दिल्लीनगरे** वर्तते ; तस्य **राजप्रतिनिधिः** इति नाम १०. **भरतखण्डः मद्रपुरी, मुंबापुरी, कलिकातापुरी** इति त्रिभिः मुख्यैः **मण्डलै**-र्विभक्तः ११. त्रयाणामपि **मण्डलानां** प्रत्येकं **माण्डलिका** वर्तन्ते १२. एकैकमपि मण्डलम् अनेकैः **प्रान्तैः** विभक्तं वर्तते १३. एकैकस्यापि **प्रान्तस्य** प्रत्येकं **भरणाधिकारिणो** नियुक्ताः १४. **एकैकोऽपि प्रान्तः तालूकानामकैः अनेकैः** भागैर्विभक्तोऽस्ति १५.

---

4. अकुतोभयः = fearless from all sources. 5. प्रधानसभा = Parliament. 6. मन्त्रिन् = Minister. कार्यदर्शी = Secretary. 8. भरतखण्डः = India. करतलामलकवत् = like a myrobalam on the palm. महामाण्डलिकः = Governor-General. 9. राजप्रतिनिधिः = Viceroy. 10 मण्डलम् = Presidency. 11. माण्डलिकः = Governor. 12. प्रान्तः = District. 13. भरणाधिकारी = Collector. 14. तालूका = Taluq.

**तालूकाया** अधिकारी **तहशील्दार्** नामा १६. तस्य **शासने** पञ्चषाः **करशोधनाधिकारिणः,** तथा प्रतिग्रामं **ग्रामगणकाः,** **ग्रामन्यायाधिपाश्च** विद्यन्ते १७. एतेषां साहाय्येन **तहशील्दारः** सम्पूर्णायास्तालूकायाः **करं** संगृह्णाति १८. एवं संचिते द्रव्ये तत्रत्यव्ययाय यावत् अपेक्षितं तावत् **तालूकाकोशागारे** निक्षिप्य अवशिष्टं सर्वं **प्रान्तकोशागारं** प्रेषयति १९. तत्रत्यः **प्रान्तकोशाध्यक्षः** तालूकाभ्यः आगतं द्रव्यं तत्र निक्षिप्य रक्षति २०. अनेकेभ्यः **जिल्लाकोशगृहेभ्यः** तत्रत्यं सर्वं द्रव्यं **मण्डलकोशगृहं** प्रति महीयते ॥

---

## न्यायप्रविभागवर्गः ॥ २५ ॥

### पाठः ५७.

एकैकस्मिन्नपि मण्डले एकैका **महोत्तमन्यायसभा** अस्ति २. तस्यां सप्त अष्टौ वा **महोत्तमप्राड्विवाका** वर्तन्ते ३. प्रति-

---

16. करशोधनाधिकारी = Revenue Inspector. ग्रामगणकः = Village Karnam. ग्रामन्यायाधिपः = Village Munsiff. 17. करः = Revenue. 18. तालूकाकोशागारः = Taluq Treasury. प्रान्तकोशागारः = District Treasury. 19. कोशाध्यक्षः = Treasurer. 20. मण्डलकोशः = Presidency Treasury. प्रविभागः = Department.

1. महोत्तमन्यायसभा = High Court. 2. महोत्तमप्राड्विवाकः = **High Court Judge.**

प्रान्तं एकैकः **प्रान्तप्राड्विवाकः**, द्वित्राः **उपप्राड्विवाकाश्च** नियमिताः ४. प्रायः प्रतितालुकं **मुनसीफनामा न्यायाधिपतिः** अधिकारितोऽस्ति ५. पूर्वोक्ता एते सर्वेऽपि न्यायाधिकारिणः **वादिना प्रतिवादिनं** प्रति दत्तं **अभियोगं** दृष्ट्वा तस्य **निरीक्षणदिनं** निश्चित्य वादिप्रतिवादिनोर्निवेदयन्ति ६. वादिना स्वप्रतिनिधित्वेन कल्पितो **न्यायवादी** तस्मिन्व्यवहारे विद्यमानं **न्यायं** सयुक्तिकं सप्रमाणं च प्राड्विवाकाय **निरूपयति** ७. तथैव प्रतिवादिना कल्पितोऽन्यो न्यायवादी स्वन्यायं कथयति ८. ततोऽ**क्षदर्शकः हेतुवादिनोः उपन्यासं** श्रुत्वा **पक्षद्वयेपि साक्षिणो** विचार्य **सभ्यानाम्** अभिप्रायं च पृष्ट्वा धर्मशास्त्रानुसारेण **यावद्बुद्धि तत्त्वं** निर्धारयति ९. **निर्धारणपात्रिकां** स्वयं विलिख्य **अन्यायस्थेन न्यायस्थाय** धनं दापयति ॥

---

3. प्रान्तप्राड्विवाकः = District Judge. उपप्राड्विवाकः = Subordinate Judge. 4. न्यायाधिपतिः = Judge. अधिकारितः = appointed. 5. वादी = plaintiff. प्रतिवादी = defendant. व्यवहारः = अभियोगः = suit निरीक्षणदिनम् = hearing date. 6. न्यायवादी-हेतुवादी = pleader. न्यायः = argument. निरूपयति = pleads 8. अक्षदर्शकः = Judge. उपन्यासः = argument. पक्षः = side. साक्षी = witness. सभ्यः = jury. यावद्बुद्धि = as far as one's knowledge goes. तत्वम् = truth. 9. निर्धारणपत्रिका = judgment.

# दण्डधारप्रविभागवर्गः ॥ २६ ॥

पाठः ५८.

सर्वेष्वपि पत्तनेषु महाग्रामेषु च **दण्डधारस्थानानि** कल्पितानि सन्ति २. तत्र अनेके **रक्षापुरुषाः**, कतिपये **प्रधानरक्षापुरुषाः**, एको **दण्डधारनिरूपकश्च** भवेयुः ३. रक्षापुरुषाः नगरं ग्रामांश्च अटित्वा अकार्यकारिणो दमयन्ति ४. चोरेभ्यः प्रजानां रक्षणमेव तेषां मुख्यं कार्यम् ५. यदा कश्चिचोरः परगृहे भित्तौ सुरङ्गां कृत्वा वा कवाटस्य मुद्रां भङ्क्ता वा उत्प्लुत्य वा गृहस्यान्तः प्रविश्य स्वामिनो धनं धान्यादिकं वा चोरयति तदा तं **चोरं** गृहीत्वा **निरूपकस्य** समीपं ते प्रापयन्ति ६. निरूपकः तं **पाटच्चरं** विचार्य स्वाभिप्रायेण सह **उपधर्माध्यक्षाय** समर्पयति ७. सः तं चोरं, गृहस्वामिनं, **रक्षापुरुषांश्च** विचार्य यथायोग्यं तं चोरं देहतो वा, धनतो वा, उभयतो वा, दण्डयति, **कशया** ताडयति **कारागृहे** वा निरोधयति ८. यदि कश्चिदयोग्यो निरपराधिनं ताडयति, अवमनुते वा, स्त्रियं दूषयति वा तमपि विचार्य **अधिकारी** दण्डयति ९. रक्षापुरुषाः **मद्यपान् अक्षदेविनश्च** निगृह्णन्ति १०. सर्वेष्वप्यपराधेषु राजद्रोहो महान् ॥

---

दण्डधारः = Police. प्रविभागः = department.

1. दण्डधारस्थानम् = Police station. 2. रक्षापुरुषः = constable. प्रधानरक्षापुरुषः = Head constable. दण्डधारनिरूपकः = Police Inspector. 6. उपधर्माध्यक्षः = Sub-magistrate. पाटच्चरः = a thief. 7. कशा = a whip, செவுக்கு. कारागृहम् = jail. 9. मद्यपः = a drunkard. अक्षदेवी = a gambler.

# नगरपालनप्रविभागवर्गः ॥ २७ ॥

---

### पाठः ५९.

प्रतिनगरं **नगरपालिका सभा** जनानां **निरामयाय** स्थापितास्ति २. तस्यां सभायां एकः **सभाध्यक्षः** एकः **कार्यदर्शी** बहवः **सभासदश्च** वर्तन्ते ३. कार्यदर्शी **आरोग्यनिरूपकान्** नगरं परितः संचार्य तेभ्यस्तत्र तत्र विद्यमानां न्यूनतां विज्ञाय तां परिहृत्य नगरं शुद्धं स्थापयति ४. नगरम् अशुद्धं चेत् **मारिका, विषूची, ग्रन्थिज्वरः** एवमादयो रोगा जनानां संभवेयुः ५. **नगरपालनव्ययार्थं** प्रजाभ्यः वार्षिको **गृहकरः वृत्तिकरश्च** संगृह्यते ॥

---

---

नगरपालनसभा = municipality.

1. सभा = council. निरामयः = health. 2. सभाध्यक्षः = a chairman. सभासत् = councillor. 3. आरोग्यनिरूपकः = sanitary inspector. 4. मारिका = small-pox. 5. गृहकरः = house tax. वृत्तिकरः = profession tax.

# पञ्चिकानिवेशनप्रविभागः ॥ २८ ॥

पाठः ६०.

इदं **व्यवहारलेख्यानां पञ्चिकानिवेशनस्थानम्** २. अस्मिन् स्थाने **ऋणलेख्यानि** दानपत्राणि एवमादीनि **पत्राणि तत्रत्यपञ्चिकारूढानि** क्रियन्ते ३. एवं पत्राणां **राजकीय-पञ्चिकायाम् आरोपणेन** "मया ऋणं न गृहीतम्" इति मिथ्या वक्तुं वा, "अहं ऋणं दत्तवान्" इति मिथ्या वक्तुं वा अवकाशो न भवति ४. पत्राणां योग्यतानुसारेण **निवेशकेन शुल्कं** गृह्यते ॥

# लेखप्रापणप्रविभागः ॥ २९ ॥

पाठः ६१.

पश्यात्र **पत्रिकाप्रापणस्थानम्** अस्ति २. अस्य **पोष्टाफीस्** इति नाम ३. इतरेभ्यः **कार्यस्थानेभ्यः** इदं कार्यस्थानम् अत्यावश्यकम् ४. एतस्मिन्काले सर्वेषां बान्धवाः **अधिकारार्थं** दूरदेशेषु वसन्ति ५. स्ववृत्तान्तं तेभ्यो ज्ञापयितुं, तेषां वृत्तान्तं स्वयं ज्ञातुं चेदं **स्थानं** बहूपयुज्यते

पञ्चिकानिवेशनम्=registration.

1. व्यवहारलेख्यम्=A document. 2. ऋणलेख्यम्=Credit-deed. विक्रयलेख्यम्=Sal-deed. दानपत्रम्=Gift. deed.

2. पञ्चिका=Register book. आरूढम्=Recorded.
4. निवेशकः=Registrar. शुल्कम्=fee.

1. पत्रिकाप्रापणस्थानम्=Post office. 4 अधिकारः=duty.

६. **पोष्टवेतनस्य** प्रतिनिधितया **पोष्टमुद्राः** कृताः ७. तेषां मूल्यं पैकात्रयादारभ्य क्लृप्तं वर्तते ८. **आच्छादितपत्राणां** अर्धानकमुद्रा संयोज्या ९. पोष्ट **चीटिकाया** मूल्यं पैकात्रयम् १०. उत्तरलेखनाय **उत्तरचीटिका**ऽस्ति; तस्या मूल्यं अर्धानकम् ११. पञ्चतोलातोलितायाः पुस्तकपोटलिकायाश्च **षट् पैकामुद्रा** संयोज्या १२. अन्यपदार्थानां **पोटलिकानां** आविंशतेस्तोलाया द्व्यानकमुद्रा १३. प्रेष्यमाणानां पत्रादीनां **पञ्चिकारोपणाय** द्वावानकौ पृथक् स्याताम् १४. मुद्रां संयोज्य कुंभघोणे **पत्रपेटिकायां** अद्य **निक्षिप्तानि** पत्रादीनि षष्ट्यधिकसप्तशतैकसहस्र (१७६०) क्रोशे विद्यमानं दिल्लीनगरं **षट्सप्तैः** दिनैर्गच्छेयुः १५. एतत्स्थानाध्यक्षस्य **पोष्टमास्तर्** इति नाम १६. अन्यस्थलेषु स्थितेभ्यो जनेभ्यः **द्रव्यादेश**द्वारा द्रव्यं प्रेषयितुं शक्यम् १७. तस्य **आदशभ्यो** रूपिकाभ्यः **शुल्कं** द्वौ आनकौ; आपञ्चविंशतेः चतस्र आनकाः; तदुपरि प्रतिपञ्चविंशति चत्वार आनकाः १८. पश्य! **पत्रप्रापकाः** पत्रस्थानात् पत्रादीनि गृहीत्वा बहिर्गच्छन्ति १९. ते स्वस्ववीथिषु तानि पत्राणि तत्तत्स्वामिभ्यः प्रयच्छन्ति; **पञ्चिकारोपितानि** तु तेभ्यो **हस्तलेखं** गृहीत्वा

---

6. पोष्टवेतनम्=Postage. मुद्रा=lable. 8. आच्छादितपत्रम्=Envelope. 9. चीटिका=card. 10. उत्तरचीटिका=reply card 11. पुस्तकपोटलिका=Book post. 12. पोटलिका=a parcel. 14. पत्रपेटिका=letter box. 16. द्रव्यादेशः=द्रव्यं दातुं आदेशः=Money order. 17. शुल्कम्=comission. 18. पत्रप्रापकः=post man. 19. हस्तलेखः=signature.

प्रयच्छन्ति २०. **पोष्टस्थानात् पोष्टगोण्यः** वाष्पशकटद्वारा देशान्तरं प्रेष्यन्ते ; यत्र देशे वाष्पशकटश्रेणी नास्ति तत्र **जाङ्घिकानां** शिरसि गोणीर्निक्षिप्य प्रेषयन्ति पत्रस्थानाधिपाः ॥

## अथ संकीर्णप्रविभागवर्गः ॥ ३० ॥

### पाठः ६२.

एवं **लावणिकप्रविभागः आरण्यकप्रविभागः, अध्यापनप्रविभागः, वैद्यकप्रविभागः** इत्यादयोऽनेके **प्रविभागाः** वर्तन्ते २. तत्तत्प्रविभागानां कार्यस्थानेषु **सेवकाः, लिपिकराः, प्रतिलेखकाः, गणनाध्यक्षाः, कोशाध्यक्षाः, निर्वाहकाः** इत्येवमादयोऽनेके अधिकारिणो वर्तन्ते ३. सर्वेभ्योऽधिकारिभ्यस्तत्तद्योग्यतानुसारेण मासिकं वेतनं दीयते ४. चिराय राज्याधिकारे सेवित्वा वार्धके स्वाधिकाराद्विरतेभ्यः **भूतपूर्वसेवाभृतिः** दीयते ५. उत्तमाधिकारे स्थिताः केचन **अपराधं** कृत्वा **अधमाधिकारं** प्राप्नुवन्ति ६. महापराधं कृतवन्तः केचन **भ्रष्टाधिकाराश्च** भवन्ति ७. केचनापराधिनः कंचित्कालम् **अधिकारात् निष्कास्यन्ते** ८. कतिचन समर्थाः **स्वकौशल्येन** उत्तमाधिकारिणः संतोष्य शीघ्रं **उन्नतां पदवीं** प्राप्नुवन्ति ॥

---

20 पोष्टगोणी = post bag, जाङ्घिकः = runner, messenger. सङ्कीर्ण = miscellaneous.

1. लावणिकः = salt department. आरण्यकः = forest. अध्यापनम् = Education. वैद्यकम् = medical. 2. सेवकः = a peon. प्रतिलेखकः = a copyist. गणनाध्यक्षः = an accountant. निर्वाहकः = manager. 4. सेवित्वा = having served. भूतपूर्वसेवाभृतिः = pension. 6. भ्रष्टाधिकारः = dismissed from office. 7. कंचित्कालम् अधिकारात् निष्कास्यन्ते = are suspended. 8. कौशल्यम् = talent. पदवी = degree, rank.

# आङ्गलराज्यस्तुतिः ॥ ३१ ॥

पाठः ६३

अस्माकं **चक्रवर्ती पञ्चमो जार्जः** एवं विधान्यनेकानि सौकर्याणि अस्माकं कृत्वा **भरतखण्डं** परिपालयति २. **तेन** रक्षिता वयं अकुतोभया वर्तामहे ३. **सः** स्वयं खैस्तमतस्थोपि भारतीयैरस्माभिः क्रियमाणस्य धर्मस्य साहाय्यं करोति ४. **बाष्पशकटाः**, तारायन्त्राणि, पोष्टव्यवस्था, पाठशालाः, मुख्यपत्तनेपु **जलप्रणालिकाः** एवमादीनि अनेकानि सौकर्याणि जनानां आङ्गलानां शासनकालादारभ्यैवोत्पन्नानि; नदीनां **संक्रमाः** ग्रामाद्ग्रामं गन्तुं **मार्गाश्च** विपुलीकृताः ५. अनृतभूयिष्ठेऽस्मिन्काले यद्येते आंग्ला अस्माकं रक्षका नाभविष्यंस्तदा वयं पूर्वमेव व्यनङ्क्ष्याम ६. आस्माकीन एष भरतखण्डः एतेषामेव शासने **आचन्द्रार्कं** तिष्ठतु ; **अस्मन्महाराजः** सपुत्रकलत्रः दीर्घायुर्भवत्विति च ईश्वरं प्रार्थयामहे ॥

---

# कविवाक्यानि ॥ ३२ ॥

पाठः ६४.

अनन्तरकरणीयं आर्य आज्ञापयतु २. आर्ये ! सम्यगनुबोधितोऽस्मि ३. अस्मिन्क्षणे विस्मृतं खलु मया ४. सूत !

---

1. चक्रवर्ती=An Emperor, A sovereign. भरतखण्ड:=India. 4. जलप्रणालिका=water pipe. संक्रम:=bridge. 6. आचन्द्रार्कम् =as long as the sun and the moon exist,

सुदूरममुना सारङ्गेण वयमाकृष्टाः ५. आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ६. समिदाहरणाय प्रस्थिता वयम् ७. भवतु तामेव द्रक्ष्यामि ८. किं न पश्यसि भवान्? ९. कथमयं स भगवान्कण्वः? १०. राजन्! अत्रैव मुहूर्तं तिष्ठ ११. तथापि तत्वतएनामुपलप्स्ये १२. एष नूनं तवात्मनो मनोरथः ॥

---

पाठः ६५.

न एष दुष्टो विरमति २. अन्यतो वयं गमिष्यामः ३. नूनं यूयमप्यनेन कर्मणा परिश्रान्ताः ४. किमपि हृदये कृत्वा ब्रवीषि ५. इदानीमेव लब्धावकाशो मे मनोरथः ६. हला! एकाकिनीं मामत्र विहाय न ते गमनं युक्तम् ७. अरण्ये खलु मया रुदितम् ८. सावशेषं मे वचः ९. गच्छतां पुरो भवन्तौ १०. अहमप्यनुपदमागत एव ११. सखि! प्रष्टव्याऽसि त्वं किमपि १२. किं प्रष्टुकामाऽसि? १३. कथय किंनिमित्तं ते संतापः? १४. सखि! शृणु; कस्य वान्यस्य कथयिष्यामि १५. **अवचितानि** पूजापर्याप्तानि पुष्पाणि १६. अपि ज्ञायते **कतमेन दिग्विभागेन** गतः स **जाल्मः**? १७. **ऐशान्या** दिशा १८. सखीजनः खलु कुत्र भवेत्? ॥

---

पाठः ६६.

अयि! स्वस्ति भवत्यै? २. किं वा तूष्णीमास्ते भवान्? ३. **समासतो** ब्रवीमि श्रूयताम् ४. भो! **अवहितोऽस्मि** ५. अलं भवतः परिदेवितेन ६. तदुपायश्चिन्त्यतां, यथा

सफलप्रार्थनो भवेयम् ७. किमयं **भुजङ्गनिर्मोकः?** ८. उपनय पुस्तकम् ९. हा! कथं न दृश्यते १०. ननु विचिनुहि सम्यक् ११. अलमावेगेन; समाश्वसिहि १२. एतदेव तत्पुस्तकम् १३. तेन राम इति वक्तव्ये रावण इति निर्गता वाणी १४. किमपि हृदये कृत्वा अन्यत्किमपि जल्पसि १५. भण विश्रब्धो यदासि वक्तुकामः १६. पत्तने सति ग्रामे रत्नपरीक्षा युज्यते किम्? १७. किं नामैतत्; यदंबुनि मज्जन्त्यलाबूनि, ग्रावाणः प्लवन्ते? १८. अये! कथमनभ्रा वृष्टिः? १९. विचित्राणि विधिविलसितानि ॥

---

पाठः ६७.

नास्ति खलु दुष्करं दैवस्य? २. सर्वस्य **वल्लभो** जामाता भवति ३. गुणः खल्वनुरागस्य कारणम्; न **बलात्कारः** ४. **अपेयेषु** तटाकेषु बहुतरमुदकं भवति ५. मूले च्छिन्ने कुतः पुष्पम्? ६. **शिरसि भयम्**; अतिदूरे तत्प्रतीकारः ७. न **निष्परिग्रहं स्थानभ्रंशः** पीडयिष्यति ८. यत्ने सकृद्विफलेऽपि नोद्यमस्त्याज्यः ९. **प्रकृतिर्दुस्त्यजा** १०. **वक्तुं सुकरम्; दुष्करं कर्तुम्** ११- अनुकूलं हि दैवं सर्वस्मै स्वस्ति करोति १२. न हि सर्वः सर्वं जानाति १३. न सर्वदा सर्वस्य सदृशो दशापाकः १४. जलं जलेन संपृक्तं महाजलाय भवति १५. बद्धो वाससि ग्रन्थिः १६. एष त्वं स्वप्नलब्धैर्मोदकैर्ग्राममुपनिमन्त्रयसि १७. किं गते सलिले सेतुबन्धेन १८. किं कृते विवाहे नक्षत्रपरीक्षया १९. अहो! गरीयान् कालः; यत् **अश्रुतचर**मपि श्रावयति; **अदृष्टचर**मपि दर्शयति ॥

### पाठः ६८.

किं **प्राहुणिक**हस्तेन सर्पं मारयसि ? २. अनर्थशङ्कीनि बन्धुजनहृदयानि ३. यच्छील: स्वामी, तच्छीलास्तस्य **प्रकृतयः** ४. किमात्मनो दोषं लोको विजानाति ? ५. किं स्वयं नष्टः **परान्नाशयितुमिच्छसि** ? ६. न हि जगति मशको मातङ्गस्य **प्रतिस्पर्धी** भवति ७. न खलु क्षुधितोऽपि शार्दूलः कदाचिदपि **शाद्वल**मत्ति ८. न खलु बधिराणां कुतूहलमातनोति कोकिलालापः ९. नहि **बलिभुजः** प्रक्षाल्यमाना वलक्षतां लभन्ते १०. नहि शतमप्यन्धाः संभूय पश्यन्ति ११. नहि संबन्धिजने परिहासवचनानि पापकारणानि १२. स्वदेशगतः शशः परदेशकुञ्जरातिशायी ॥

---

### पाठः ६९.

अलमतिविस्तरेण २. **वैदेशिको**ऽस्मीति पृच्छामि कः पुनरसौ जामाता ? ३. विभाण्डकसुतस्तामृश्यशृङ्ग उपयेमे ४. सर्वथा ऋषयो देवाश्च श्रेयो विधास्यन्ति ५. भो भोः ! क्वेदानीं महाराजः ? ६. एवं जनाः कथयन्ति ७. देव ! ऋश्यशृङ्गाश्रमादष्टावक्रः प्राप्तः ८. **आर्यपुत्र** ! तर्हि किं विलम्ब्यते ? ९. **दौवारिक** ! त्वरितं प्रवेशय तम् १०. भगवन् ! अभिवादयावहे ११. स्वस्ति वाम् १२. इत आस्यताम् १३. अपि कुशलं आर्यायाः शान्तायाः ? १४. सा अस्मानपि स्मरति ? १५. तत्किमन्यदाशास्महे ; केवलं **वीरप्रसवा** भूयाः १६. अनुगृहीताः स्मः १७. इदं च शान्तया संदिष्टम् १८. वत्से ! त्वं

**कठोरगर्भा**ऽसीति नानीतासि यज्ञम् १९. तत् **पुत्रपूर्णोत्सङ्गाम् आयुष्मतीं** द्रक्ष्यामः २०. तथाऽस्तु ॥

### पाठः ७०.

कः कोऽत्र भोः ? २. विश्राम्यतां तावदष्टावक्रः ३. वन्दस्व देवि ! ऋषीन् ४. नम एतेभ्यः ५. एष मिथिलावृत्तान्तः ६. एते वयमिदानीम् अयोध्यां प्राप्ताः ७. स्मरति वा तं प्रदेशं भवान् ? ८. अयि ! कथं विस्मरामि ? ९. हा धिक् ! हा धिक् १०. यथातथा वा भवतु ११. आर्यपुत्र ! युष्माभिरप्यागन्तव्यम् १२. अयि मुग्धे ! एतदपि वक्तव्यम् ? १३. तेन हि प्रियं मे १४. प्रिये ! वातायनोपकण्ठे संविष्टौ भवाव १५. एवं भवतु १६. एहि संविशावः ॥

### पाठः ७१.

ज्ञायतां भोः ! किमेतत् ? २. कां पुनरत्रभवतीमवगच्छामि ३. कुतः पुनरिहागम्यते ? ४. अहो ! नु भोश्चित्रमेतत् ५. विश्रान्ताऽस्मि भद्रे ! ६. संप्रत्यगस्त्याश्रमस्य पन्थानं मे ब्रूहि ७. इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ८. यथाऽऽज्ञापयति भवांस्तथा करोमि ९. आः ! किमुक्तं भवति ? १०. यद्भवति तद्भवतु ११. संप्रत्येव वसिष्ठेन कौसल्यायाः सकाशं अरुन्धती प्रेषिता १२. दिष्ट्या सुप्रभातमद्य, यदहं त्वां पश्यामि ॥

**सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।**
**सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ॥**



॥ श्रीः ॥

# रघुवंशे ।

## एकादशः सर्गः ।

कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयःसमीक्ष्यते ॥ १ ॥

कृच्छ्रलब्धमपि लब्धवर्णभाक्तं दिदेश मुनये सलक्ष्मणम् ।
अप्यसुप्रणयिनां रघोः कुले न व्यहन्यत कदाचिदर्थिता ॥ २ ॥

यावदादिशति पार्थिवस्तयोर्निर्गमाय पुरमार्गसंस्क्रियाम् ।
तावदाशु विदधे मरुत्सखैः सा सपुष्पजलवर्षिभिर्घनैः ॥ ३ ॥

तौ निदेशकरणोद्यतौ पितुर्धन्विनौ चरणयोर्निपेततुः ।
भूपतेरपि तयोः प्रवत्स्यतोर्नम्रयोरुपरि बाष्पबिन्दवः ॥ ४ ॥

तौ पितुर्नयनजेन वारिणा किञ्चिदुक्षितशिखण्डकावुभौ ।
धन्विनौ तमृषिमन्वगच्छतां पौरदृष्टिकृतमार्गतोरणौ ॥ ५ ॥

लक्ष्मणानुचरमेव राघवं नेतुमैच्छदृषिरित्यसौ नृपः ।
आशिषं प्रयुयुजे न वाहिनीं सा हि रक्षणविधौ तयोः क्षमा ॥ ६ ॥

मातृवर्गचरणस्पृशौ मुनेस्तौ प्रपद्य पदवीं महौजसः ।
रेजतुर्गतिवशात्प्रवर्तिनौ भास्करस्य मधुमाधवाविव ॥ ७ ॥

तौ बलातिबलयोः प्रभावतो विद्ययोः पथि मुनिप्रदिष्टयोः ।
मम्लतुर्न मणिकुट्टिमोचितौ मातृपार्श्वपरिवर्तिनाविव ॥ ८ ॥

पूर्ववृत्तकथितैः पुराविदः सानुजः पितृसखस्य राघवः ।
उह्यमान इव वाहनोचितः पादचारमपि न व्यभावयत् ॥ ९ ॥

तौ सरांसि रसवद्भिरम्बुभिः कूजितैः श्रुतिसुखैः पतत्रिणः ।
वायवः सुरभिपुष्परेणुभिश्छायया च जलदाः सिषेविरे ॥ १० ॥

स्थाणुदग्धवपुषस्तपोवनं प्राप्य दाशरथिरात्तकार्मुकः ।
विग्रहेण मदनस्य चारुणा सोऽभवत्प्रतिनिधिर्न कर्मणा ॥ ११ ॥

तौ सुकेतुसुतया खिलीकृते कौशिकाद्विदितशापया पथि ।
निन्यतुः स्थलनिवेशिताटनी लीलयैव धनुषी अधिज्यताम् ॥

ज्यानिनादमथ गृह्णती तयोः प्रादुरास बहुलक्षपाछविः ।
ताटका चलकपालकुण्डला कालिकेव निबिडा बलाकिनी ॥ १३॥

तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसा स्वनोग्रया ।
अभ्यभावि भरताग्रजस्तया वात्ययेव पितृकाननोत्थया ॥ १४ ॥

उद्यतैकभुजयष्टिमायतीं श्रोणिलम्बिपुरुषान्त्रमेखलाम् ।
तां विलोक्य वनितावधे घृणां पत्रिणा सह मुमोच राघवः ॥१५॥

यच्चकार विवरं शिलाघने ताटकोरसि स रामसायकः ।
अप्रविष्टविषयस्य रक्षसां द्वारतामगमदन्तकस्य तत् ॥ १६ ॥

बाणभिन्नहृदया निपेतुषी सा स्वकाननभुवं न केवलाम् ।
विष्टपत्रयपराजयस्थिरां रावणश्रियमपि व्यकम्पयत् ॥ १७ ॥

नैर्ऋतघ्नमथ मन्त्रवन्मुनेः प्रापदस्त्रमवदानतोषितात् ।
ज्योतिरिन्धननिपाति भास्करात्सूर्यकान्त इव ताटकान्तकः ॥

वामनाश्रमपदं ततः परं पावनं श्रुतमृषेरुपेयिवान् ।
उन्मनाः प्रथमजन्मचेष्टितान्यस्मरन्नपि बभूव राघवः ॥ १९ ॥

आससाद मुनिरात्मनस्ततः शिष्यवर्गपरिकल्पितार्हणम् ।
बद्धपल्लवपुटाञ्जलिद्रुमं दर्शनोन्मुखमृगं तपोवनम् ॥ २० ॥

तत्र दीक्षितमृषिं ररक्षतुर्विघ्नतो दशरथात्मजौ शरैः ।
लोकमन्धतमसात्क्रमोदितौ रश्मिभिः शशिदिवाकराविव ॥२१॥

वीक्ष्य वेदिमथ रक्तबिन्दुभिर्बन्धुजीवपृथुभिः प्रदूषिताम् ।
सम्भ्रमोऽभवदपोढकर्मणामृत्विजां च्युतविकङ्कतस्रुचाम् ॥ २२ ॥

उन्मुखः सपदि लक्ष्मणाग्रजो बाणमाश्रयमुखात्समुद्धरन् ।
रक्षसां बलमपश्यदम्बरे गृध्रपक्षपवनेरितध्वजम् ॥ २३ ॥

तत्र यावधिपती मखद्विषां तौ शरव्यमकरोत्स नेतरान् ।
किं महोरगविसर्पिविक्रमो राजिलेषु गरुडः प्रवर्तते ॥ २४ ॥

सोऽस्त्रमुग्रजवमस्त्रकोविदः सन्दधे धनुषि वायुदैवतम् ।
तेन शैलगुरुमप्यपातयत्पाण्डुपत्रमिव ताटकासुतम् ॥ २५ ॥

यः सुबाहुरिति राक्षसोऽपरस्तत्र तत्र विससर्प मायया ।
तं क्षुरप्रशकलीकृतं कृती पत्रिणां व्यभजदाश्रमाद्बहिः ॥ २६ ॥

इत्यपास्तमखविघ्नयोस्तयोः सांयुगीनमभिनन्द्य विक्रमम् ।
ऋत्विजः कुलपतेर्यथाक्रमं वाग्यतस्य निरवर्तयन्क्रियाः ॥२७॥

तौ प्रणामचलकाकपक्षकौ भ्रातराववभृथाप्लुतो मुनिः ।
आशिषामनुपदं समस्पृशद्दर्भपाटिततलेन पाणिना ॥ २८ ॥

तं न्यमन्त्रयत सम्भृतक्रतुर्मैथिलः स मिथिलां व्रजन्वशी ।
राघवावपि निनाय बिभ्रतौ तद्धनुःश्रवणजं कुतूहलम् ॥ २९ ॥

तैः शिवेषु वसतिर्गताध्वभिः सायमाश्रमतरुष्वगृह्यत ।
येषु दीर्घतपसः परिग्रहो वासवक्षणकलत्रतां ययौ ॥ ३० ॥

प्रत्यपद्यत चिराय यत्पुनश्चारु गौतमवधूः शिलामयी ।
स्वं वपुः स किल किल्बिषच्छिदां रामपादरजसामनुग्रहः ॥३१॥

राघवान्वितमुपस्थितं मुनिं तं निशम्य जनको जनेश्वरः ।
अर्थकामसहितं सपर्यया देहवद्धमिव धर्ममभ्यगात् ॥ ३२ ॥

तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू ।
मन्यते स्म पिवतां विलोचनैः पक्ष्मपातमपि वञ्चनां मनः ॥ ३३ ॥

यूपवत्यवसिते क्रियाविधौ कालवित्कुशिकवंशवर्धनः ।
राममिष्वसनदर्शनोत्सुकं मैथिलाय कथयाम्बभूव सः ॥ ३४ ॥

तस्य वीक्ष्य ललितं वपुः शिशोः पार्थिवः प्रथितवंशजन्मनः ।
स्वं विचिन्त्य च धनुर्दुरानमं पीडितो दुहितृशुल्कसंस्थया ॥ ३५ ॥

अब्रवीच्च भगवन्मतङ्गजैर्यद्बृहद्भिरपि कर्म दुष्करम् ।
तत्र नाहमनुमन्तुमुत्सहे मोघवृत्ति कलभस्य चेष्टितम् ॥ ३६ ॥

ह्रेपिता हि बहवो नरेश्वरास्तेन तात धनुषा धनुर्भृतः ।
ज्यानिघातकठिनत्वचो भुजान्स्वान्विधूय धिगिति प्रतस्थिरे ॥

प्रत्युवाच तमृषिर्निशम्यतां सारतोऽयमथवा गिरा कृतम् ।
चाप एव भवतो भविष्यति व्यक्तशक्तिरशनिर्गिराविव ॥ ३८ ॥

एवमाप्तवचनात्स पौरुषं काकपक्षकधरेऽपि राघवे ।
श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिरिव कृष्णवर्त्मनि ॥ ३९ ॥

व्यादिदेश गणशोऽथ पार्श्वगान्कार्मुकाभिहरणाय मैथिलः ।
तैजसस्य धनुषः प्रवृत्तये तोयदानिव सहस्रलोचनः ॥ ४० ॥

तत्प्रसुप्तभुजगेन्द्रभीषणं वीक्ष्य दाशरथिराददे धनुः ।
विद्रुतक्रतुमृगानुसारिणं येन बाणमसृजद्वृषध्वजः ॥ ४१ ॥

आततज्यमकरोत्स संसदा विस्मयस्तिमितनेत्रमीक्षितः ।
शैलसारमपि नातियत्नतः पुष्पचापमिव पेशलं स्मरः ॥ ४२ ॥

भज्यमानमतिमात्रकर्षणात्तेन वज्रपरुषस्वनं धनुः ।
भार्गवाय दृढमन्यवे पुनः क्षत्रमुद्यतमिव न्यवेदयत् ॥ ४३ ॥

दृष्टसारमथ रुद्रकार्मुके वीर्यशुल्कमभिनन्द्य मैथिलः ।
राघवाय तनयामयोनिजां रूपिणीं श्रियमिव न्यवेदयत् ॥ ४४ ॥

मैथिलः सपदि सत्यसङ्गरो राघवाय तनयामयोनिजाम् ।
सन्निधौ द्युतिमतस्तपोनिधेरग्निसाक्षिक इवातिसृष्टवान् ॥ ४५ ॥

प्राहिणोच्च महितं महाद्युतिः कोसलाधिपतये पुरोधसम् ।
भृत्यभावि दुहितुः परिग्रहाद्दिश्यतां कुलमिदं निमेरिति ॥ ४६ ॥

अन्वियेष सदृशीं स च स्नुषां प्राप चैनमनुकूलवाग्द्विजः ।
सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलधर्मि काङ्क्षितम् ॥ ४७ ॥

तस्य कल्पितपुरस्क्रियाविधेः शुश्रुवान्वचनमग्रजन्मनः ।
उच्चचाल बलभित्सखो वशी सैन्यरेणुमुषितार्कदीधितिः ॥ ४८ ॥

तौ समेत्य समये स्थितावुभौ भूपती वरुणवासवोपमौ ।
कन्यकातनयकौतुकक्रियां स्वप्रभावसदृशीं वितेनतुः ॥ ४९ ॥

पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्मिलाम् ।
यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे ॥ ५० ॥

ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहाः ।
सामदानविधिभेदनिग्रहाः सिद्धिमन्त इव तस्य भूपतेः ॥ ५१ ॥

ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन्कृतार्थताम् ।
सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः ॥ ५२ ॥

एवमात्तरतिरात्मसम्भवांस्तान्निवेश्य चतुरोऽपि तत्र सः ।
अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्तत ॥ ५३ ॥

तेजसः सपदि राशिरुत्थितः प्रादुरास किल वाहिनीमुखे ।
यः प्रमृज्य नयनानि सैनिकैर्लक्षणीयपुरुषाकृतिश्चिरात् ॥ ५४ ॥

पित्र्यमंशमुपवीतलक्षणं मातृकं च धनुरूर्जितं दधत् ।
यः ससोम इव घर्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः ॥ ५५ ॥

तं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितम् ।
बालसूनुरवलोक्य भार्गवं स्वां दशां च विषसाद पार्थिवः ॥ ५६ ॥

नाम राम इति तुल्यमात्मजे वर्तमानमहिते च दारुणे ।
हृद्यमस्य भयदायि चाभवद्रत्नजातमिव हारसर्पयोः ॥ ५७ ॥

तेन कार्मुकनिषक्तमुष्टिना राघवो विगतभीः पुरोगतः ।
अङ्गुलीविवरचारिणं शरं कुर्वता निजगदे युयुत्सुना ॥ ५८ ॥

क्षत्रजातमपकारवैरि मे तन्निहत्य बहुशः शमं गतः ।
सुप्तसर्प इव दण्डघट्टनाद्रोषितोऽस्मि तव विक्रमश्रवात् ॥ ५९ ॥

मैथिलस्य धनुरन्यपार्थिवैस्त्वं किलानमितपूर्वमक्षणोः ।
तन्निशम्य भवता समर्थये वीर्यशृङ्गमिव भग्नमात्मनः ॥ ६० ॥

अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात् ।
व्रीडमावहति मे स सम्प्रति व्यस्तवृत्तिरुदयोन्मुखे त्वयि ॥ ६१ ॥

क्षत्रियान्तकरणोऽपि विक्रमस्तेन मामवति नाजिते त्वयि ।
पावकस्य महिमा स गण्यते कक्षवज्ज्वलति सागरेऽपि यः ॥ ६२ ॥

विद्धि चात्तबलमोजसा हरेरैश्वरं धनुरभाजि यत्त्वया ।
खातमूलमनिलो नदीरयैः पातयत्यपि मृदुस्तटद्रुमम् ॥ ६३ ॥

तन्मदीयमिदमायुधं ज्यया सङ्गमय्य सशरं विकृष्यताम् ।
तिष्ठतु प्रधनमेवमप्यहं तुल्यबाहुतरसा जितस्त्वया ॥ ६४ ॥

कातरोऽसि यदि वोद्गतार्चिषा तर्जितः परशुधारया मम ।
ज्यानिघातकठिनाङ्गुलिर्वृथा बध्यतामभययाचनाञ्जलिः ॥ ६५ ॥

एवमुक्तवति भीमदर्शने भार्गवे स्मितविकम्पिताधरः ।
तद्धनुर्ग्रहणमेव राघवः प्रत्यपद्यत समर्थमुत्तरम् ॥ ६६ ॥

पूर्वजन्मधनुषा समागतः सोऽतिमात्रलघुदर्शनोऽभवत् ।
केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलाञ्छितः ॥

तेन भूमिनिहितैककोटि तत्कार्मुकं च बलिनाधिरोपितम् ।
निष्प्रभश्च रिपुरास भूभृतां धूमशेष इव धूमकेतनः ॥ ६७ ॥

तावुभावपि परस्परस्थितौ वर्धमानपरिहीनतेजसौ ।
पश्यति स्म जनता दिनात्यये पार्वणौ शशिदिवाकराविव ॥६८॥

तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि ।
स्वं च संहितममोघमाशुगं व्याजहार हरसूनुसन्निभः ॥ ६९ ॥

न प्रहर्तुमलमस्मि निर्दयं विप्र इत्यभिभवत्यपि त्वयि ।
शंस किं गतिमनेन पत्रिणा हन्मि लोकमुत ते मखार्जितम् ॥७०॥

प्रत्युवाच तमृषिर्न तत्त्वतस्त्वां न वेद्मि पुरुषं पुरातनम् ।
गां गतस्य तव धाम वैष्णवं कोपितो ह्यसि मया दिदृक्षुणा ॥७१॥

भस्मसात्कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागराम् ।
आहितो जयविपर्ययोऽपि मे श्लाघ्य एव परमेष्ठिना त्वया ॥७२॥

तद्गतिं मतिमतां वरेप्सितां पुण्यतीर्थगमनाय रक्ष मे ।
पीडयिष्यति न मां खिलीकृता स्वर्गपद्धतिरभोगलोलुपम् ॥७३॥

प्रत्यपद्यत तथेति राघवः प्राङ्मुखश्च विससर्ज सायकम् ।
भार्गवस्य सुकृतोऽपि सोऽभवत्स्वर्गमार्गपरिघो दुरत्ययः ॥ ७४ ॥

राघवोऽपि चरणौ तपोनिधेः क्षम्यतामिति वदन्समस्पृशत् ।
निर्जितेषु तरसा तरस्विनां शत्रुषु प्रणतिरेव कीर्तये ॥ ७५ ॥

राजसत्वमवधूय मातृकं पित्र्यमस्मि गमितः शमं यदा ।
नन्वनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः ॥ ७६ ॥

साधयाम्यहमविघ्नमस्तु ते देवकार्यमुपपादयिष्यतः ।
ऊचिवानिति वचः सलक्ष्मणं लक्ष्मणाग्रजमृषिस्तिरोदधे ॥७७॥

तस्मिन्गते विजयिनं परिरभ्य रामं
स्नेहादमन्यत पिता पुनरेव जातम् ।
तस्याभवत्क्षणशुचः परितोषलाभः
कक्षाग्निलङ्घिततरोरिव वृष्टिपातः ॥ ७८ ॥

अथ पथि गमयित्वा क्लृप्तरम्योपकार्ये
कतिचिदवनिपालः शर्वरीः शर्वकल्पः ।
पुरमविशदयोध्यां मैथिलीदर्शनीनां
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥ ७९ ॥

इति रघुवंशे सीताविवाहवर्णनो नामैकादशस्सर्गः
समाप्तः ।

---

# READY FOR SALE.



| | | |
|---|---|---|
| 1. | The Sanskrit I Reader | 0—4—6 |
| 2. | The Sanskrit II Reader | 0-10—0 |
| 8. | The Sanskrit III Reader | 0—8—0 |
| 4. | Sabdaroopavali ... ... | 0—8—6 |
| 5. | Brihat Sabdaroopavali ... | 0—8 —0 |
| 6. | Sanskrit Copy-book No. I | 0—2—0 |
| 7. | Sanskrit Copy-book No. II. | 0—2—0 |
| 8. | Tamil meaning of Sanskrit II Reader | 0—6—0 |
| 9. | 5th Canto of Kumarasambhava. | 0—1—6 |
| 10. | 11th Canto of Raghuvamsa. | 0—1—6 |

11. Brihad Dhaturoopavali in the Press will be ready for sale in April 1924.

(1) **Pandit. T. R. Krishnacharya,**

*Proprietor Madhva Vilasa Book Depot,*

63. East Ayan Street

1—11—1923. ***KUMBAKONAM.***

(2) SUBRAHMANYA VADHYAR,

*Book Seller,*

Kalpathy - PALGHAT.